तत्पश्य मे बुद्धिप्रभावम्; परं ममापि सुहृद्भूता वीणा-रवा नाम मक्षिकास्ति। तत्तामाहूयागच्छामि येन स दुरात्मा दुष्टगजो वध्यते। अथासौ चटकया सह मक्षिका-मासाद्य प्रोवाच, भद्रे! ममेष्टेयं चटका केनचिद्दुष्टगजेन पराभूताण्डस्फोटनेन। ततस्तु बधोपायमनुतिष्ठतो मे साहाय्यं कर्तुमर्हसि। मक्षिकाप्याह, भद्र! किमु-च्यतेऽत्र विषये। उक्तञ्च,

पुनःप्रत्युपकाराय मित्राणां क्रियते प्रियम् ।
यत्पुनर्मित्रमित्रस्य कार्यं मित्रैर्न किं कृतम् ॥ ३६८ ॥

सत्यमेतत्, परं ममापि भेको मेघनादो नाम मित्रं तिष्ठति; तमप्याहूय यथोचितं कुर्मः। उक्तञ्च,

हितैः साधुसमाचारैः शास्त्रज्ञैर्मतिशालिभिः ।
कथञ्चिन्न विकल्पन्ते विद्वद्भिश्चिन्तिता नयाः ॥ ३७० ॥

अथ ते त्रयोऽपि गत्वा मेघनादस्याग्रे समस्तमपि वृत्तान्तं निवेद्य तस्थुः। अथ स प्रोवाच, कियन्मात्रोऽसौ वराको गजो महाजनस्य कुपितस्याग्रे। तन्मदीयो मन्त्रः कर्त्तव्यः। मक्षिके! त्वं गत्वा मध्याह्नसमये तस्य मदो-द्धतस्य गजस्य कर्णे वीणारवसदृशं शब्दं कुरु, येन श्रवण-सुखलालसो निमीलितनयनो भवति। ततश्च काष्ठकूटचञ्चु-स्फोटितनयनोऽन्धीभूतस्तृषार्त्तो मम गर्त्ततटाश्रितस्य सपरि-करस्य शब्दं श्रुत्वा जलाशयं मत्वा समभ्येति। ततो गर्त्तमा-साद्य पतिष्यति पञ्चत्वं यास्यति चेति। एवं समवायः

कर्त्तव्यो यथा वैरसाधनं भवति। अथ तथानुष्ठिते स मत्तगजो मक्षिकागेयसुखान्निमीलितनेत्रः काष्ठकूटहृतचक्षुर्मध्याह्नसमये भ्राम्यन् मण्डूकशब्दानुसारी गच्छन् महतीं गर्त्तामासाद्य पतितो मृतश्च। अतोऽहं ब्रवीमि, चटका काष्ठकूटेनेति।

टिट्टिभ आह, भद्रे! एवं भवतु; सुहृद्वर्गसमुदायेन समुद्रं शोषयिष्यामीति निश्चित्य बकसारसमयूरादीन् समाहूय प्रोवाच, भोः! पराभूतोऽहं समुद्रेणाण्डकापहारेण तच्चिन्त्यतामस्य शोषणोपायः। ते संमन्त्र्य प्रोचुः, अशक्ता वयं समुद्रशोषणे, तत् किं वृथाप्रयासेन? उक्तञ्च,

अबलः प्रोन्नतं शत्रुं यो याति मदमोहितः।
युद्धार्थं स निवर्तेत शीर्णदन्तो गजो यथा॥ २७१॥

तदस्माकं स्वामी वैनतेयोऽस्ति, तस्मै सर्वमेतत्परिभवस्थानं निवेद्यतां येन स्वजातिपरिभवकुपितो वैरानृण्यं गच्छति। अथवात्रावलेपं करिष्यति तथापि नास्ति वो दुःखम्। उक्तञ्च,

सुहृदि निरन्तरचित्ते गुणवति भृत्येऽनुवर्त्तिनि कलत्रे।
स्वामिनि शक्तिसमेते निवेद्य दुःखं सुखी भवति॥ २७२॥

तद्यामो वैनतेयसकाशं यतोऽसावस्माकं स्वामी। तथानुष्ठिते सर्वे ते पक्षिणो विषण्णवदना बाष्पपूरितदृशः वैनतेयसकाशमासाद्य करुणस्वरेण फूत्कर्तुमारब्धाः; अहो! अब्रह्मण्यमब्रह्मण्यम्!!! अधुना सदाचारस्य टिट्टिभस्य भवति

नाथे सति, समुद्रेणाण्डान्यपहृतानि। तन्नष्टमधुना पक्षिकुलम्। अन्येऽपि स्वेच्छया समुद्रेण व्यापादयिष्यन्ते; उक्तञ्च, एकस्य कर्म संवीक्ष्य करोत्यन्योऽपि गर्हितम्।

गतानुगतिको लोको न लोकः पारमार्थिकः॥ ३७३॥

तथा च, चाटतस्करदुर्वृत्तैस्तथा साहसिकादिभिः।

पीड्यमानाः प्रजा रक्ष्याः कूटच्छद्मादिभिस्तथा॥३७४॥

प्रजानां धर्मषड्भागो राज्ञो भवति रक्षितुः।

अधर्मादपि षड्भागो जायते यो न रक्षति॥ ३७५॥

प्रजापीड़नसंतापात्समुद्भूतो हुताशनः।

राज्ञः श्रियं कुलं प्राणांश्चादग्ध्वा विनिवर्त्तते॥ ३७६॥

राजा बन्धुरबन्धूनां राजा चक्षुरचक्षुषाम्।

राजा पिता च माता च सर्वेषां न्यायवर्त्तिनाम्॥३७७॥

फलार्थी पार्थिवो लोकान् पालयेद्यत्नमास्थितः।

दानमानादितोयेन मालाकारोऽङ्कुरानिव॥ ३७८॥

यथा बीजाङ्कुरः सूक्ष्मः प्रयत्नेनाभिरक्षितः।

फलप्रदो भवेत्काले तद्वल्लोकः सुरक्षितः॥३७९॥

हिरण्यधान्यरत्नानि यानानि विविधानि च।

तथान्यदपि यत्किञ्चित्प्रजाभ्यः स्यान्नृपस्य तत्॥ ३८०॥

अथैवं गरुड़ः समाकर्ण्य तद्दुःखदुःखितः कोपाविष्टश्च व्यचिन्तयत्, अहो! सत्यमुक्तमेतैः पक्षिभिः, तदद्य गत्वा तं समुद्रं शोषयामः। एवं चिन्तयतस्तस्य विष्णुदूतः समागत्याह, भो गरुत्मन्! भगवता नारायणेनाहं तव पार्श्वे

प्रेषितः ; देवकार्थाय भगवानमरावत्यां यास्यतीति, तत् सत्वरमागम्यताम् ; तच्छ्रुत्वा गरुडः साभिमानं प्राह, भो दूत ! किं मया कुभृत्येन भगवान् करिष्यति । तद्गत्वा तं वद यदन्यो भृत्यो वाहनायास्मत्स्थाने क्रियताम् । मदीयो नमस्कारो वाच्यो भगवतः । उक्तञ्च,

यो न वेत्ति गुणान् यस्य न तं सेवेत पण्डितः ।
न हि तस्मात् फलं किञ्चित्सुकृष्टादूषरादिव ॥२८१॥

दूत आह, भो वैनतेय ! कदाचिदपि भगवन्तं प्रति त्वया नैतदभिहितमीदृक् । तत्कथय किं ते भगवतापमानस्थानं कृतम् ? गरुड आह, भगवदाश्रयभूतेन समुद्रेण स्मट्टिट्टिभाण्डान्यपहृतानि, तद्यदि तस्य निग्रहं न करोति तदहं भगवतो न भृत्य इत्येष निश्चयस्त्वया वाच्यः । तत् द्रुततरं गत्वा भवता भगवतः समीपे गन्तव्यम् । अथ दूतमुखेन प्रणयकुपितं वैनतेयं विज्ञाय भगवांश्चिन्तयामास, अहो ! स्थाने कोपो वैनतेयस्य ; तत् स्वयमेव गत्वा सम्मानपुरःसरं तमानयामि । उक्तञ्च,

भक्तं शक्तं कुलीनञ्च न भृत्यमपमानयेत् ।
पुत्रवल्लालयेन्नित्यं य इच्छेच्छ्रियमात्मनः ॥२८२ ॥

अन्यच्च, राजा तुष्टोऽपि भृत्यानामर्थमात्रं प्रयच्छति ।
ते तु सम्मानितास्तस्य प्राणैरप्युपकुर्वते ॥ २८३ ॥

इत्येवं सम्प्रधार्य रुक्मपुरे वैनतेयसकाशं सत्वरमगमत्, वैनतेयोऽपि गृहागतं भगवन्तमवलोक्य त्रपाधोमुख

प्रणम्योवाच, भगवन्! त्वदाश्रयीभूतेन समुद्रेण मम भृत्यस्याण्डान्यपहृत्य ममापमानं विहितम्। परं भवल्लज्जया मया विलम्बितं मोचेदेनमहं स्थलान्तमद्यैव नयामि, यतः स्वामिभयाच्छुभोऽपि प्रहारो न दीयते। उक्तञ्च,

येन स्याल्लघुता वाथ पीडा चित्ते प्रभोः क्वचित्।
प्राणत्यागेऽपि तत्कर्म न कुर्य्यात्कुलसेवकः॥ ३८४ ॥

तत् श्रुत्वा भगवानाह, भो वैनतेय! सत्यमभिहितं भवता। उक्तञ्च,

भृत्यापराधजो दण्डः स्वामिनो जायते यतः।
तेन लज्जापि तस्योत्था न भृत्यस्य तथा पुनः॥३८५॥

तदागच्छ येनाण्डानि समुद्रादादाय टिट्टिभं सम्भावयावोऽमरावतीञ्च गच्छावः। तथानुष्ठिते समुद्रो भगवता निर्भर्त्स्याग्नेयं शरं सन्धायाभिहितः, भो दुरात्मन्! दीयन्तां टिट्टिभाण्डानि नो चेत्स्थलतां त्वां नयामि। ततः समुद्रेण सभयेन टिट्टिभाण्डानि तानि प्रदत्तानि, टिट्टिभेनापि भार्यायै समर्पितानि। अतोऽहं ब्रवीमि, शत्रोर्बलमविज्ञायेति।

तस्मात्पुरुषेणोद्यमो न त्याज्यः; तदाकर्ण्य सञ्जीवकस्तमेव भूयोऽपि पप्रच्छ, भो मित्र। कथं ज्ञेयो मयासौ दुष्टबुद्धिरिति। इयन्तं कालं यावदुत्तरोत्तरस्नेहेन प्रसादेन चाहं दृष्टो न कदाचित्तद्विकृतिर्दृष्टा; तत्कथ्यतां येनाहमात्मरक्षार्थं तद्वधायोद्यमं करोमि। दमनक आह, भद्र! किमत्र

श्रेयम्? एष ते प्रत्ययः, यदि रक्तनेत्रस्त्रिशिखां भृकुटीं दधानः सृक्कणी परिलेलिहत्त्वां दृष्ट्वा भवति तदुष्टबुद्धिरयमिति प्रसादयेति। तदाज्ञापय माम्, स्वाश्रयं प्रति गच्छामि। त्वया च यथायं मन्त्रभेदो न भवति तथा कार्यम्। यदि निशामुखं प्राप्य गन्तुं शक्नोषि तद्देशत्यागः कार्यः। यतः,

त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत्।
ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत् ॥३८६॥
आपदर्थे धनं रक्षेद्दारान् रक्षेद्धनैरपि।
आत्मानं सततं रक्षेद्दारैरपि धनैरपि ॥ ३८७ ॥

बलवताभिभूतस्य विदेशगमनं तदनुप्रवेशो वा नीतिः। तद्देशत्यागः कार्यः। अथवात्मा सामादिभिरुपायैरभिरक्षणीयः। उक्तञ्च,

अपि पुत्रकलत्रैर्वा प्राणान् रक्षेत पण्डितः।
विद्यमानैर्यतस्तैः स्यात्सर्वं भूयोऽपि देहिनाम् ॥३८८॥

तथाच, येन केनाप्युपायेन शुभेनाप्यशुभेन वा।
उद्धरेद्दीनमात्मानं समर्थो धर्ममाचरेत् ॥३८९॥
यो मायां कुरुते मूढः प्राणत्यागे धनादिषु।
तस्य प्राणाः प्रणश्यन्ति तैर्नष्टैर्नष्टमेव तत् ॥३९०॥

एवमभिधाय दमनकः करटकसकाशमगमत्। करटकोऽपि तमायान्तं दृष्ट्वा प्रोवाच, भद्र! किं कृतं तत्र भवता? दमनक आह, मया यावन्नीतिबीजनिर्वापणं कृतं परतो दैवविहितायत्तम्। उक्तञ्च यतः,

पराङ्मुखेऽपि दैवेऽत्र कृत्यं कार्यं विपश्चिता ।
आत्मदोषविनाशाय स्वचित्तस्तम्भनाय च ॥ २९१ ॥

तथा च, उद्योगिनं पुरुषसिंहमुपैति लक्ष्मी-
दैवं हि दैवमिति कापुरुषा वदन्ति ।
दैवं निहत्य कुरु पौरुषमात्मशक्त्या
यत्ने कृते यदि न सिध्यति कोऽत्र दोषः ? ॥ २९२ ॥

करटक आह, तत्कथय कीदृक् त्वया नीतिबीजं निर्वापितम् । सोऽब्रवीत् ; मयान्योन्यं ताभ्यां मिथ्याप्रजल्पनेन भेदस्तथा विहितो यथा भूयोऽपि मन्त्रयन्तावेकस्थानस्थितौ न द्रक्ष्यसि । करटक आह, अहो ! न युक्तं भवता विहितं यत्परस्परं तौ स्नेहार्द्रहृदयौ सुखाश्रयौ कोपसागरे प्रक्षिप्तौ । उक्तञ्च,

अविरुद्धं सुखस्थं यो दुःखमार्गे नियोजयेत् ।
जन्मजन्मान्तरे दुःखी स नरः स्यादसंशयम् ॥ २९३ ॥

अपरं त्वं यद्भेदमात्रेणापि तुष्टस्तदप्ययुक्तं यतः सर्वोऽपि जनो विरूपकरणे समर्थो भवति नोपकर्तुम् । उक्तञ्च,

घातयितुमेव नीचः परकार्यं वेत्ति न प्रसाधयितुम् ।
पातयितुमस्ति शक्तिर्वायोर्वृक्षं नचोन्नमितुम् ॥ २९४ ॥

दमनक आह, अनभिज्ञो भवान् नीतिशास्त्रस्य, तेनैतद्ब्रवीषि । उक्तञ्च यतः,

जातमात्रं न यः शत्रुं व्याधिञ्च प्रशमं नयेत् ।
महाबलोऽपि तेनैव वृद्धिं प्राप्य स हन्यते ॥ २९५ ॥

तच्छत्रुभूतोऽयमस्माकं मन्त्रिपदापहरणात् । उक्तञ्च,

पितृपैतामहं स्थानं यो यस्यात्र जिगीषते ।

स तस्य सहजः शत्रुरुच्छेद्योऽपि प्रिये स्थितः ॥ २८६ ॥

तन्मया स उदासीनतया समानीतोऽभयप्रदानेन याव त्तावदहमपि तेन साचिव्यात्प्रच्यावितः । अथवा साध्विद मुच्यते,

दद्यात्साधुर्यदि निजपदे दुर्जनाय प्रवेशं
तन्नाशाय प्रभवति ततो वाञ्छमानः स्वयं सः ।
तस्माद्देयो विपुलमतिभिर्नावकाशोऽधमानां
जारोऽपि स्याद्गृहपतिरिति श्रूयते वाक्यतोऽत्र ॥२८७॥

तेन मया तस्योपरि बधोपाय एष विरच्यते । दैवात्त्या गाय वा भविष्यति । तच्च त्वां मुक्त्वान्यो न ज्ञास्यति ; तद्युक्तमेतत्स्वार्थायानुष्ठितम् । उक्तञ्च यतः,

निस्त्रिंशं हृदयं कृत्वा वाणीं चक्षुरसीपमाम् ।
विकल्पोऽत्र न कर्त्तव्यो हन्यात्तत्रापकारिणम् ॥ २८८ ॥

अपरं मृतोऽप्ययमस्माकं भोज्यो भविष्यति ; तदेकं ताव द्वैरसाधनम् । अपरं साचिव्यञ्च भविष्यति तृप्तिश्चेति । तद्गुणत्रयेऽस्मिन्नुपस्थिते कस्मान्मां दूषयसि त्वं जाड्यभावात् । उक्तञ्च,

परस्य पीडनं कुर्वन्स्वार्थसिद्धिं च पण्डितः ।
मूढबुद्धिर्न भक्षेत वने चतुरको यथा ॥ २८९ ॥

करटक आह, कथमेतत् ? स आह,

## कथा १६ ।

अस्ति कस्मिंश्चिद्वनोद्देशे वज्रदंष्ट्रो नाम सिंहः, तस्य चतुरकक्रव्यमुखनामानौ शृगालवृकौ भृत्यभूतौ सदैवानुगतौ तत्रैव वने प्रतिवसतः। अथान्यदिने सिंहेन कदाचिदासन्नप्रसवा प्रसववेदनया स्वयूथाद्भ्रष्टोष्ट्री उपविष्टा कस्मिंश्चिद्वनगहने समासादिता। अथ तां व्यापाद्य यावदुदरं स्फोटयति, तावज्जीवल्लघुदासेरकशिशुर्निष्क्रान्तः। सिंहोऽपि दासेरक्याः पिशितेन सपरिवारः परां तृप्तिमुपागतः पर स्नेहात् बालदासेरकं त्यक्तं गृहमानीयेदमुवाच, भद्र! न तेऽस्ति मृत्योर्भयं मत्तो नान्यस्मादपि। ततः स्वेच्छयात्र वने भ्राम्यतामिति। यतस्ते शङ्कुसदृशौ कर्णौ ततः शङ्कुकर्णो नाम भविष्यति। एवमनुष्ठिते चत्वारोऽपि त एकस्थाने विहारिणः परस्परमनेकप्रकारगोष्ठीसुखमनुभवन्तस्तिष्ठन्ति। शङ्कुकर्णोऽपि यौवनपदवीमारूढः क्षणमपि न तं सिंहं मुञ्चति। अथ कदाचिद्वज्रदंष्ट्रस्य केनचिद्वन्येन मत्तगजेन सह युद्धमभवत्। तेन मदवीर्यात्स दन्तप्रहारैस्तथा क्षतशरीरो विहितो यथा प्रचलितुं न शक्नोति। तदा क्षुत्क्षामकण्ठस्तान् प्रोवाच, भो! अन्विष्यतां किञ्चित्सत्त्वं येनाहमेवंस्थितोऽपि तद्व्यापाद्यात्मनो युष्माकञ्च क्षुत्प्रणाशं करोमि। तच्छ्रुत्वा ते त्रयोऽपि वने सन्ध्याकालं यावद्भ्रान्ताः पर न किञ्चित्सत्त्वमासादितम्। अथ चतुरकश्चिन्तयामास, यदि

शङ्कुकर्णोऽयं व्यापाद्यते ततः सर्वेषां कतिचिद्दिनानि तृप्तिर्भवति परं नैनं स्वामी मित्रत्वादाश्रयसमाश्रितत्वाच्च विनाशयिष्यति। अथवा बुद्धिप्रभावेण स्वामिनं प्रतिबोध्य तथा करिष्ये यथा व्यापादयिष्यति। उक्तञ्च,

अवध्यं चाथवागम्यमकृत्यं नास्ति किञ्चन।
लोके बुद्धिमतां बुद्धेस्तस्मात्तां विनियोजयेत्॥ ४००॥

एवं विचिन्त्य शङ्कुकर्णमिदमाह। भोः शङ्कुकर्ण! स्वामी तावत्पथ्यं विना क्षुधया परिपीड्यते। स्वाम्यभावादस्माकमपि ध्रुवं विनाश एव। ततो वाक्यं किञ्चित्स्वाम्यर्थं वदिष्यामि। तच्छ्रूयताम्। शङ्कुकर्ण आह, भो! शीघ्रं निवेद्यतां येन ते वचनं शीघ्रं निर्विकल्पं करोमि। अपरं स्वामिनो हिते कृते मया सुकृतशतं कृतं भविष्यति। अथ चतुरक आह, भो भद्र! आत्मशरीरं द्विगुणलाभेन स्वामिने प्रयच्छ, येन ते द्विगुणं शरीरं भवति, स्वामिनः पुनः प्राणयात्रा भवति। तदाकर्ण्य शङ्कुकर्णः आह, भद्र! यद्येवं तन्मदीयप्रयोजनमेतदुच्यताम्। स्वाम्यर्थः क्रियतामिति, परमत्र धर्मः प्रतिभूरिति ते विचिन्त्य सर्वे सिंहसकाशमाजग्मुः। ततश्चतुरक आह, देव! न किञ्चित्सत्त्वं प्राप्तम्। भगवानादित्योऽप्यस्तङ्गतः। तद्यदि स्वामी द्विगुणं शरीरं प्रयच्छति ततः शङ्कुकर्णोऽयं द्विगुणवृद्ध्या स्वशरीरं प्रयच्छति धर्मप्रतिभुवा। सिंह आह, भोः! यद्येवं तत्सुन्दरतरम्, व्यवहारस्यास्य धर्मः प्रतिभूः क्रियतामिति।

थ सिंहवचनानन्तरं वृकशृगालाभ्यां विदारितोभयकुक्षिः
ङ्कुकर्णः पञ्चत्वमुपागतः। अथ वज्रदंष्ट्रश्चतुरकमाह, भो-
तुरक! यावदहं नदीं गत्वा स्नानदेवतार्चनविधिं कृत्वा-
च्छामि, तावत्त्वयात्राप्रमत्तेन भाव्यमित्युक्त्वा नद्यां गतः,
थ तस्मिन् गते चतुरकश्चिन्तयामास, कथं ममैकाकिनो
ोज्योऽयमुष्ट्रो भविष्यतीति विचिन्त्य क्रव्यमुखमाह; भोः
व्यमुख। क्षुधालुर्भवान्; तद्यावदसौ स्वामी नागच्छति
ावत्त्वमस्योष्ट्रस्य मांसं भक्षय। अहं त्वां स्वामिनो निर्दोषं
तिपादयिष्यामि। सोऽपि तच्छ्रुत्वा यावत् किञ्चिन्मांस-
ास्वादयति तावच्चतुरकेणोक्तम्, भोः क्रव्यमुख! समा-
च्छति स्वामी; तत्त्यक्त्वैनं दूरे तिष्ठ येनास्य भक्षणं न
कल्पयति। तथानुष्ठिते सिंहः समायातो यावदुष्ट्रं पश्यति
ावद्रिक्तीकृतहृदयो दासेरकः। ततो भ्रूकुटिं कृत्वा परुष-
रमाह, अहो। केनैष उष्ट्र उच्छिष्टतां नीतो येन तमपि
्यापादयामि। एवमभिहिते क्रव्यमुखश्चतुरकमुखमवलो-
यति, किल तद्वद् किञ्चिद्येन मम शान्तिर्भवति।
थ चतुरको विहस्योवाच, भो! मामनादृत्य पिशित
चयित्वाधुना मन्मुखमवलोकयसि। तदास्वादयास्य
नयतरोः फलमिति। तदाकर्ण्य क्रव्यमुखो जीवनाशभया-
्रदेश गतः। एतस्मिन्नन्तरे तेन मार्गेण दासेरकसार्थो
ाराक्रान्तः समायातः। तस्याग्रसरोष्ट्रस्य कण्ठे महती घण्टा
ा। तस्याः शब्दं दूरतोऽप्याकर्ण्य सिंहो जम्बुकमाह,

भद्र! श्रूयतां किमेष रौद्रः शब्दः श्रूयतेऽश्रुतपूर्वः। तच्छ्रुत्वा चतुरकः किञ्चिद्वनान्तरं गत्वा सत्वरमभ्युपेत्य प्रोवाच, स्वामिन्! गम्यतां गम्यतां यदि शक्नोषि गन्तुम्। सोऽब्रवीत्, भद्र! किमेवं मां व्याकुलयसि। तत् कथय किमेतदिति, चतुरक आह, स्वामिन्! एष धर्मराजस्तवोपरि कुपितः, यदनेनाकाले दासेरकोऽयं मदीयो व्यापादितस्तत्सहस्रगुणमुष्ट्रमस्य सकाशाद्ग्रहीष्यामीति निश्चित्य वृहन्मानमादायाग्रेसरस्तोऽस्य ग्रीवायां घण्टां बद्धा वध्यदासेरकसकानपि पितृपितामहानादाय वैरनिर्यातनार्थमायात एव। सिंहोऽपि तच्छ्रुत्वा सर्वतो दूरादेवावलोक्य मृतमुष्ट्रं परित्यज्य प्राणभयात्प्रनष्टः। चतुरकोऽपि शनैःशनैस्तस्योष्ट्रस्य मांसं भक्षयामास। अतोऽहं ब्रवीमि, परस्य पीडनं कुर्व्वन्निति।

अथ दमनके गते सञ्जीवकश्चिन्तयामास, अहो! किमेतन्मया कृतं यच्छष्पादोऽपि मांसाशिनस्तस्यानुगः संवृत्तः। अथवा साध्विदमुच्यते,

अगम्यान्यः पुमान् याति असेव्यांश्च निषेवते।
स मृत्युमुपगृह्णाति गर्भमश्वतरी यथा ॥ ४०१ ॥

तत्किं करोमि, क्व गच्छामि, कथं मे शान्तिर्भविष्यति, अथवा तमेव पिङ्गलकं गच्छामि, कदाचिन्मां शरणागतं रक्षति प्राणैर्न वियोजयति। यत उक्तञ्च।

धर्म्मार्थं यततामपीह विपदो दैवाद्यदि स्युः क्वचित्

तत्तासामुपशान्तये सुमतिभिः कार्यो विशेषाश्रयः ।
लोके ख्यातिमुपागतात्र सकले लोकोक्तिरेषा यतो
दग्धानां किल वह्निना हितकरः सेकोऽपि तस्योद्भवः ॥ ४०२ ॥

तथाच, लोकेऽथवा तनुभृतां निजकर्मपाकं
नित्यं समाश्रितवतां सुहितक्रियाणाम् ।
भावार्जितं शुभमथाप्यशुभं निकामं
यद्भावि तद्भवति नात्र विचारहेतुः ॥ ४०३ ॥

अपरं चान्यत्र गतस्यापि मे कस्यचिद् दुष्टसत्त्वस्य मांसाशिनः सकाशान्मृत्युर्भविष्यति, तद्वरं सिंहात् । उक्तञ्च,

महद्भिः स्पर्धमानस्य विपदेव गरीयसी ।
दन्तभङ्गोऽपि नागानां श्लाघ्यो गिरिविदारणे ॥ ४०४ ॥

तथाच, महतोऽपि क्षयं लब्ध्वा श्लाघ्यं नीचोऽपि गच्छति ।
दानार्थी मधुपो यद्वद्गजकर्णसमाहतः ॥ ४०५ ॥

एवं निश्चित्य स स्खलितगतिर्मन्दं मन्दं गत्वा सिंहाश्रयं पश्यन्नपठत्, अहो ! साध्विदमुच्यते,

अन्तर्लीनभुजङ्गमं गृहमिव व्यालाकुलं वा वनं
ग्राहाकीर्णमिवाभिरामकमलच्छायासनाथं सरः ।
नानादुष्टजनैरसत्यवचनासक्तैरनार्यैर्वृतं
दुःखेन प्रतिगम्यते प्रचकितै राज्ञां गृहं वार्धिवत् ॥ ४०६ ॥

एवं पठन् दमनकोक्ताकारं पिङ्गलकं दृष्ट्वा प्रचकितः संहृतशरीरो दूरतरं प्रणामकृतिं विनाप्युपविष्टः ; पिङ्गलकोऽपि तथाविधं तं विलोक्य दमनकवाक्यं श्रद्दधानः

कोपात्तस्योपरि पपात। अथ सञ्जीवकः खरनखर विकर्त्तितपृष्ठः शृङ्गाभ्यां तदुदरमुल्लिख्य कथमपि तस्मा-दपेतः शृङ्गाभ्यां हन्तुमिच्छन् युद्धायावस्थितः। अथ द्वावपि तौ पुष्पितपलाशप्रतिमौ परस्परवधकाङ्क्षिणौ दृष्ट्वा कर-टको दमनकमाह, भो मूढमते! अनयोर्विरोधं वितन्वता त्वया साधु न कृतम्, न च त्वं नीतितत्त्वं वेत्सि, नीति विद्भिरुक्तञ्च,

कार्य्याण्युत्तमदण्डसाहसफलान्यायाससाध्यानि ये
प्रीत्या संशमयन्ति नीतिकुशलाः साम्नैव ते मन्त्रिणः।
निःसाराल्पफलानि ये त्वविधिना वाञ्छन्ति दण्डोद्यमै
स्तेषां दुर्नयचेष्टितैर्नरपतेरारोप्यते श्रीस्तुलाम्॥ ४०७॥

तद्यदि स्वाम्यभिघाती भविष्यति तरिकं त्वदीयमन्त्र बुद्ध्या क्रियते। अथ सञ्जीवको न बध्यते तथाप्यभव्यं यतः प्राणसन्देहात्तस्य च बधः। तन्मूढ! कथं त्वं मन्त्रिपदमभि लषसि, सामसिद्धिं न वेत्सि, तद्वृथा मनोरथोऽयं ते दण्ड-रुचेः। उक्तञ्च,

सामादिदण्डपर्य्यन्तो नयः प्रोक्तः स्वयम्भुवा।
तेषां दण्डस्तु पापीयांस्तं पश्चाद्विनियोजयेत्॥ ४०८॥

तथाच, साम्नैव यत्र सिद्धिर्न तत्र दण्डो बुधेन विनियोज्यः।
पित्तं यदि शर्करया शाम्यति कोऽर्थः पटोलेन?॥ ४०९॥

तथाच, आदौ साम प्रयोक्तव्यं पुरुषेण विजानता।
सामसाध्यानि कार्य्याणि विक्रियां यान्ति न क्वचित्॥ ४१०॥

न चन्द्रेण न चौषध्या न सूर्य्येण न वह्निना ।
साम्नैव विलयं याति विद्वेषिप्रभवं तमः ॥ ४११ ॥

तथा यत्त्वं मन्त्रित्वमभिलषसि तदप्ययुक्तं यतस्त्वं मन्त्रिगतिं न वेत्सि । यतः पञ्चविधो मन्त्रः स च कर्म्मणामारम्भोपायः, पुरुषद्रव्यसम्पत्, देशकालविभागो, विनिपातप्रतीकारः, कार्य्यसिद्धिश्चेति । सोऽयं स्वाम्यमात्ययोरेकतमस्य किं वा द्वयोरपि विनिपातः समुत्पद्यते लग्नः । तद्यदि काचित् शक्तिरस्ति तद् विचिन्त्यतां विनिपातप्रतीकारः, भिन्नसन्धाने हि मन्त्रिणां बुद्धिपरीक्षा ; तन्मूर्ख ! तत् कर्त्तुमसमर्थस्त्वं यतो विपरीतबुद्धिरसि । उक्तञ्च,

मन्त्रिणां भिन्नसन्धाने भिषजां सान्निपातिके ।
कर्म्मणि व्यज्यते प्रज्ञा स्वस्थे को वा न पण्डितः ? ॥४१२॥

अन्यच्च, घातयितुमेव नीचः परकार्य्यं वेत्ति न प्रसाधयितुम् ।
पातयितुमेव शक्तिर्नाखोरुद्धर्त्तुमन्नपिटम् ॥ ४१३ ॥

अथवा न ते दोषोऽयं स्वामिनो दोषो यस्ते वाक्यं श्रद्दधाति । उक्तञ्च,

नराधिपा नीचजनानुवर्त्तिनो बुधोपदिष्टेन पथा न यान्ति ये ।
विशन्त्यतो दुर्गममार्गनिर्गमं समस्तसम्बाधमनर्थपञ्जरम्॥४१४॥

तद्यदि त्वमस्य मन्त्री भविष्यसि तदान्योऽपि कश्चिदस्य समीपे साधुजनः समेष्यति । उक्तञ्च,

गुणालयोऽप्यसन्मन्त्री नृपतिर्नाधिगम्यते ।
प्रसन्नस्वादुसलिलो दुष्टग्राहो यथा ह्रदः ॥ ४१५ ॥

तथा शिष्टजनरहितस्य स्वामिनोऽपि नाशो भविष्यति ।

उक्तञ्च, चित्रास्वादकथैर्भृत्यैरनायासितकार्मुकैः ।

ये रमन्ते नृपास्तेषां रमन्ते रिपवः श्रिया ॥ ४१६ ॥

तत्किं मूर्खोपदेशेन, केवलं दोषो न गुणः । उक्तञ्च,

नानाम्यं नमते दारु नाश्मनि स्यात्क्षुरक्रिया ।

सूचीमुखं विजानीहि नाशिष्यायोपदिश्यते ॥ ४१७ ॥

दमनक आह, कथमेतत् ? सोऽब्रवीत् ।

## कथा १७ ।

अस्ति कस्मिंश्चित्पर्वतैकदेशे वानरयूथम् । तच्च कदाचिद्धेमन्तसमये अतिकठोरवातसंस्पर्शवेपमानकलेवरं तुषारवर्षोद्धतप्रवर्षघनधारानिपातसमाहतं न कथञ्चिच्छान्तिमगमत् । अथ केचिद्वानरा वह्निकणसदृशानि गुञ्जाफलानि अवचित्य वह्निवाञ्छया फूत्कुर्वन्तः समन्तात्तस्थुः । अथ सूचीमुखो नाम पक्षी तेषां तं वृथायासमवलोक्य प्रोवाच, भोः ! सर्वे मूर्खाः यूयं नैते वह्निकणाः, गुञ्जाफलान्येतानि, तत्किं वृथाश्रमेण, नैतस्माच्छीतरक्षा भविष्यति । तदन्विष्यतां कश्चिन्निर्वातो वनप्रदेशो गुहा वा गिरिकन्दरं वा । अद्यापि साटोपा मेघा दृश्यन्ते । अथ तेषामेकतमो वृद्धवानरस्तमुवाच, भो मूर्ख ! किं तवानेन व्यापारेण, तद्गम्यताम् । उक्तञ्च,

मुहुर्विघ्नितकर्माणं द्यूतकारं पराजितम् ।
नालापयेद्विवेकज्ञो यदीच्छेत् सिद्धिमात्मनः ॥४१८॥
तथाच, आखेटकं वृथाक्लेशं मूर्खं व्यसनसंस्थितम् ।
आलापयति यो मूढः स गच्छति पराभवम् ॥ ४१९ ॥

सोऽपि तमनादृत्य भूयोऽपि वानराननवरतमाह, भोः! किं वृथा क्लेशेन, अथ यावदसौ न कथञ्चित् प्रलपन् विरमति तावदेकेन वानरेण व्यर्थत्वात् कुपितेन पक्षाभ्यां गृहीत्वा शिलायामास्फालित उपरतश्च । अतोऽहं ब्रवीमि । नानाम्यं नमते दार्वित्यादि ।

तथाच, उपदेशो हि मूर्खाणां प्रकोपाय न शान्तये ।
पयःपानं भुजङ्गानां केवलं विषवर्द्धनम् ॥ ४२० ॥
अन्यच्च, उपदेशो न दातव्यो यादृशे तादृशे जने ।
पश्य वानरमूर्खेण सुगृही निर्गृहीकृता ॥ ४२१ ॥

दमनक आह, कथमेतत् ? सोऽब्रवीत् ।

## कथा १८ ।

अस्ति कस्मिंश्चिद्वनोद्देशे शमीवृक्षः ; तस्य लम्बमानशिखायां कृतावासावरण्यचटकदम्पती वसतः स्म । अथ कदाचित् तयोः सुखसंस्थयोर्हेमन्तमेघो मन्दं मन्दं वर्षितुमारब्धः । अत्रान्तरे कश्चिच्छाखामृगो वातासारसमाहतः प्रोद्धूपितशरीरो दन्तवीणां वादयन् वेपमानस्तत् शमीमूल-

मासाद्योपविष्टः । अथ तं तादृशमवलोक्य चटका प्राह । भो भद्र !

हस्तपादसमोपेतो दृश्यसे पुरुषाकृतिः ।
शीतेन भिद्यसे मूढ ! कथं न कुरुषे गृहम् ॥ ४२२ ॥

एतच्छ्रुत्वा तां वानरः सकोपमाह, अधमे ! कस्मान्न त्वं मौनव्रता भवसि । अहो ! धार्ष्ट्यमस्याः अद्य मामुपहसति ।

सूचीमुखी दुराचारा रण्डा पण्डितवादिनी ।
नाशङ्कते प्रजल्पन्ती तत्किमेनां न हन्म्यहम् ॥ ४२३ ॥

एवं प्रलप्य तामाह, मुग्धे ! किं तव ममोपरि चिन्तया । उक्तञ्च,

वाच्यं श्रद्धासमेतस्य पृच्छतश्च विशेषतः ।
प्रोक्तं श्रद्धाविहीनस्य अरण्यरुदितोपमम् ॥ ४२४ ॥

तत्किं बहुना, तावत् कुलायस्थितया तयाभिहितः स यावत् तां शमीमारुह्य तस्याः कुलायः शतधा खण्डशः कृतः । अतोऽहं ब्रवीमि, उपदेशो न दातव्य इति ।

तन्मूर्ख ! शिक्षापितोऽपि न शिक्षितस्त्वम् । अथवा न ते दोषोऽस्ति यतः साधोः शिक्षा गुणाय सम्पद्यते नासाधोः उक्तञ्च,

किं करोत्येव पाण्डित्यमस्थाने विनियोजितम् ।
अन्धकारप्रतिच्छन्ने घटे दीप इवाहितः ॥ ४२५ ॥

तद्व्यर्थपाण्डित्यमाश्रित्य मम वचनमशृण्वन् नामनः शान्तिमपि न वेत्सि, तन्नूनमपजातस्त्वम् । उक्तञ्च,

जातः पुत्रोऽनुजातश्च अतिजातस्तथैव च ।
अपजातश्च लोकेऽस्मिन् मन्तव्याः शास्त्रवेदिभिः ॥ ४२६ ॥

मातृतुल्यगुणोजातस्त्वनुजातः पितुः समः ।
अतिजातोऽधिकस्तस्मादपजातोऽधमाधमः ॥ ४२७ ॥
अप्यात्मनो विनाशं गणयति न खलः परव्यसनहृष्टः ।
प्रायो मस्तकनाशे समरमुखे नृत्यति कबन्धः ॥ ४२८ ॥
अहो ! साध्विदमुच्यते,
धर्म्मबुद्धिः कुबुद्धिश्च द्वावेतौ विदितौ मम ।
पुत्रेण व्यर्थपाण्डित्यात्पिता धूमेन घातितः ॥ ४२९ ॥
दमनक आह, कथमेतत् ? सोऽब्रवीत् ।

## कथा १९ ।

अस्ति कस्मिंश्चिदधिष्ठाने धर्म्मबुद्धिः पापबुद्धिश्च द्वे मित्रे प्रतिवसतः स्म । अथ कदाचित्पापबुद्धिना चिन्तितं, अहं तावन्मूर्खो दारिद्र्योपेतश्च । तदेनं धर्म्मबुद्धिमादाय देशान्तरं गत्वास्याश्रयेणार्थोपार्जनं कृत्वैनमपि वञ्चयित्वा सुखी भवामि, अथान्यस्मिन्नहनि पापबुद्धिर्धर्म्मबुद्धिं प्राह, भो मित्र ! वार्द्धकभावे किं त्वमात्मविचेष्टितं स्मरसि । देशान्तरमदृष्ट्वा कां शिशुजनस्य वार्त्तां कथयिष्यसि । उक्तञ्च,

देशान्तरेषु बहुविधभाषावेषादि येन न ज्ञातम् ।
भ्रमता धरणीपीठे तस्य फलं जन्मनो व्यर्थम् ॥ ४३० ॥

तथाच, विद्यां वित्तं शिल्पं तावन्नाप्नोति मानवः सम्यक् ।
यावद्व्रजति न भूमौ देशाद्देशान्तरं हृष्टः ॥ ४३१ ॥

अथ तस्य तद्वचनमाकर्ण्य प्रहृष्टमनास्तेनैव सह गुरु-

जनानुयातः शुभेऽहनि देशान्तरं प्रस्थितः। तत्र च धर्मबुद्धिप्रभावेण भ्रमता पापबुद्धिना प्रभूततरं वित्तमासादितम्। ततश्च द्वावपि तौ प्रभूतोपार्जितद्रव्यौ प्रहृष्टौ स्वगृहं प्रत्यौत्सुक्येन निवृत्तौ। उक्तञ्च,

प्राप्तविद्यार्थशिल्पानां देशान्तरनिवासिनाम्।
क्रोशमात्रोऽपि भूभागः शतयोजनवद्भवेत् ॥ ४३२ ॥

अथ स्वस्थानसमीपवर्त्तिना पापबुद्धिना धर्मबुद्धिरभिहितः, भद्र! न सर्व्वमेतद्धनं गृहं प्रतिनेतुं युज्यते, यतः कुटुम्बिनो बान्धवाश्च प्रार्थयिष्यन्ति। तदत्रैव वनगहने क्वापि भूमौ निक्षिप्य किञ्चिन्मात्रमादाय गृहं प्रविशावो भूयोऽपि प्रयोजने सञ्जाते तन्मात्रं समेत्यास्मात्स्थानान्नेष्यावः। उक्तञ्च, न वित्तं दर्शयेत्प्राज्ञः कस्यचित्स्वल्पमप्यहो!।
मुनेरपि यतस्तस्य दर्शनाच्चलते मनः ॥ ४३३ ॥

तथा च, यथामिषं जले मत्स्यैर्भक्ष्यते श्वापदैर्भुवि।
आकाशे पक्षिभिश्चैव तथा सर्व्वत्र वित्तवान् ॥ ४३४ ॥

तदाकर्ण्य धर्मबुद्धिराह, भद्र! एवं क्रियताम् तथानुष्ठिते द्वावपि तौ स्वगृहं गत्वा सुखेन संस्थितवन्तौ। अथान्यस्मिन्नहनि पापबुद्धिर्निशीथेऽटव्यां गत्वा तत्सर्व्ववित्तं समादाय गर्त्तां पूरयित्वा स्वभवनं जगाम। अथान्येद्युर्धर्मबुद्धिं समभ्येत्य प्रोवाच, सखे! बहुकुटुम्बा वयं, वित्ताभावात्सीदामः। तद्गत्वा तत्र स्थाने किञ्चिन्मात्रं धनमानयावः। सोऽब्रवीत्। भद्र! एवं क्रियताम्। अथ द्वावपि गत्वा तत् स्थानं यावत्

वनतस्तावद्रिक्तंभाण्डं दृष्टवन्तौ। अत्रान्तरे पापबुद्धिः शिरस्ताड़यन् प्रोवाच, भो धर्मबुद्धे! त्वया हृतमेतद्धनं नान्येन, यतो भूयोऽपि गर्त्तापूरणं कृतम्, तत् प्रयच्छ मे तस्यार्द्धम्, अथवाहं राजकुले निवेदयिष्यामि। स आह, भो दुरात्मन्! मैवं वद, धर्मबुद्धिः खल्वहम्। नैतच्चौरकर्म्म करोमि।

उक्तञ्च, मातृवत्परदाराणि परद्रव्याणि लोष्टवत्।
आत्मवत्सर्व्वभूतानि वीचन्ते धर्मबुद्धयः॥ ४३५॥

एवं द्वावपि तौ विवदमानौ धर्म्माधिकारिणं गतौ प्रोचतुश्च परस्परं दूषयन्तौ। अथ धर्म्माधिकरणाधिष्ठितपुरुषैर्दिव्यार्थं यावन्नियोजितौ तावत्पापबुद्धिराह, अहो! न सम्यग्दृष्टोऽयं न्यायः। उक्तञ्च,

विवादेऽन्विष्यते पत्रं तदभावेऽपि साक्षिणः।
साच्यभावात्ततो दिव्यं प्रवदन्ति मनीषिणः॥ ४३६॥

तदत्र विषये मम वृक्षदेवताः साक्षीभूतास्तिष्ठन्ति। साप्यावयोरेकतरं चौरं साधुं वा करिष्यति। अथ तैः सर्व्वैरभिहितम्, भोः युक्तमुक्तं भवता। उक्तञ्च,

अन्त्यजोऽपि यदा साक्षी विवादे सम्प्रजायते।
न तत्र विद्यते दिव्यं किं पुनर्यत्र देवताः॥ ४३७॥

तदस्माकमप्यत्र विषये महत्कौतूहलं वर्त्तते। प्रत्यूषसमये युवाभ्यामप्यस्माभिः सह तत्र वनोद्देशे गन्तव्यमिति। एतस्मिन्नन्तरे पापबुद्धिः स्वगृहं गत्वा स्वजनकमुवाच, तात!

प्रभूतोऽयं मयार्थो धर्म्मबुद्धेर्यारितः, स च तव वचनेन परिणतिं गच्छति । अन्यथास्माकं प्राणैः सह यास्यति । स आह, वत्स ! द्रुतं वद येन प्रोच्य तद्द्रव्यं स्थिरतां नयामि । पापबुद्धिराह, तात ! अस्ति तत्प्रदेशे महाशमी, तस्यां महत्कोटरमस्ति ; तत्र त्वं साम्प्रतमेव प्रविश । ततः प्रभाते यदाहं सत्यश्रावणं करोमि, तदा त्वया वाच्यं यद्धर्म्मबुद्धिश्चौर इति । तथानुष्ठिते प्रत्यूषे स्नात्वा पापबुद्धिः धर्म्मबुद्धिपुरःसरो धर्म्माधिकरणिकैः सह तां शमीमभ्येत्य तारस्वरेण, प्रोवाच,

आदित्यचन्द्रावनिलोऽनलश्च
द्यौर्भूमिरापो हृदयं यमश्च ।
अहश्च रात्रिश्च उभे च सन्ध्ये
धर्म्मो हि जानाति नरस्य वृत्तम् ॥ ४३८ ॥

भगवति वनदेवते ! आवयोर्मध्ये यश्चौरं त्वं कथय, अथ पापबुद्धिपिता शमीकोटरस्थः प्रोवाच । भो ! शृणुत शृणुत धर्म्मबुद्धिना हृतमेतद्धनम् । तदाकर्ण्य सर्व्वे ते राजपुरुषा विस्मयोत्फुल्ललोचना यावद्धर्म्मबुद्धेर्वित्तहरणोचितं निग्रहं शास्त्रदृष्ट्यावलोकयन्ति तावद्धर्म्मबुद्धिना तच्छमीकोटरं वह्निभोज्यद्रव्यैः परिवेष्ट्य वह्निना सन्दीपितम् । अथ ज्वलति तस्मिन् शमीकोटरेऽर्द्धदग्धशरीरः स्फुटितेक्षणः करुणं परिदेवयन् पापबुद्धिपिता निश्चक्राम । ततश्च तैः सर्व्वैः पृष्टः भोः ! किमिदं ? इत्युक्ते स पापबुद्धिविचेष्टितं सर्व्वमिदं निवेद्यि

लोपरतः । अथ ते राजपुरुषाः पापबुद्धिं शमीशाखायां प्रतिलम्ब्य धर्मबुद्धिं प्रशस्येदमूचुः, अहो ! साध्विदमुच्यते ।

उपायं चिन्तयेत्प्राज्ञस्तथापायं च चिन्तयेत् ।
पश्यतो बकमूर्खस्य नकुलेन हता बकाः ॥ ४३८ ॥

धर्मबुद्धि प्राह, कथमेतत् ? ते प्रोचुः ।

## कथा २० ।

अस्ति कस्मिंश्चिद्वनोद्देशे बहुबकसनाथो वटपादपः । तस्य कोटरे कृष्णसर्पः प्रतिवसति स्म । स च बकबालकानजातपक्षानपि सदैव भक्षयन् कालं नयति । अथैको बकस्तेन भक्षितान्यपत्यानि दृष्ट्वा शिशुवैराग्यात्सरस्तीरमासाद्य बाष्पपूरपूरितनयनोऽधोमुखस्तिष्ठति । तञ्च तादृक्चेष्टितमवलोक्य कुलीरकः प्रोवाच । माम । किमेवं रुद्यते भवताद्य ; स आह, भद्र ! किं करोमि, मम मन्दभाग्यस्य बालकाः कोटरनिवासिना सर्पेण भक्षिताः, तद्दुःखदुःखितोऽहं रोदिमि । तत् कथय मे यद्यस्ति कश्चिदुपायस्तद्विनाशाय, तदाकर्ण्य कुलीरकश्चिन्तयामास, अयं तावदस्मज्जातिसहजवैरी । तथोपदेशं प्रयच्छामि सत्यानृतं यथान्येऽपि बकाः सर्वे संक्षयमायान्ति । उक्तञ्च,

नवनीतसमां वाणीं कृत्वा चित्तं तु निर्दयम् ।
तथा प्रबोध्यते शत्रुः सान्वयो म्रियते यथा ॥४४०॥

आह च, माम ! यद्येवं तन्मत्स्यमांसखण्डानि नकुलस्य

विलद्वारात्सर्पकोटरं यावत् प्रक्षिप यथा नकुलस्तन्मार्गेण गत्वा तं दुष्टसर्पं विनाशयति। अथ तथानुष्ठिते मत्स्यमांसानुसारिणा नकुलेन तं कृष्णसर्पं निहत्य तेऽपि तद्वृक्षाश्रयाः सर्वे बकाश्च शनैःशनैर्भक्षिताः। अतो वयं ब्रूमः। उपायं चिन्तयेदिति।

तदनेन पापबुद्धिनोपायश्चिन्तितो नापायः। ततस्तत्फलं प्राप्तम्।

धर्मबुद्धिः कुबुद्धिश्च द्वावेतौ विदितौ मम।
पुत्रेण व्यर्थपाण्डित्यात् पिताधूमेन घातितः॥ ४४१॥

एवं मूढ। त्वयाप्युपायश्चिन्तितो नापायः पापबुद्धिवत्। तन्न भवसि त्वं सज्जनः केवलं पापबुद्धिरसि ज्ञातो मया स्वामिनः प्राणसन्देहानयनात्। प्रकटीकृतं त्वया स्वयमेवात्मनो दुष्टत्वं कौटिल्यञ्च। अथवा साध्विदमुच्यते।

यत्नादपि कः पश्येच्छिखिनामाहारनिःसरणमार्गम्।
यदि जलदध्वनिमुदितास्त एव मूढा न नृत्येयुः॥ ४४२॥

तद्यदि त्वं स्वामिनमेनां दशां नयसि तदस्मद्विधस्य का गणना। तस्मान्ममासन्नेन भवता न भाव्यम्। उक्तञ्च,

तुलां लोहसहस्रस्य यत्र खादन्ति मूषिकाः।
राजं स्तत्र हरेच्छ्येनो बालकं नात्र संशयः॥ ४४३॥

दमनक आह, कथमेतत्? सोऽब्रवीत्।

# कथा २१ ।

अस्ति कस्मिंश्चिदधिष्ठाने जीर्णधनो नाम वणिक्पुत्रः । स च विभवक्षयाद्देशान्तरगमनमना व्यचिन्तयत् ।

यत्र देशेऽथवा स्थाने भोगान् भुक्त्वा स्ववीर्यतः ।
तस्मिन् विभवहीनो यो वसेत्स पुरुषाधमः ॥ ४४४ ॥

तथाच, येनाहङ्कारयुक्तेन चिरं विलसितं पुरा ।
दीनं वदति तत्रैव यः परेषां स निन्दितः ॥ ४४५ ॥

तस्य च गृहे लोहभारघटिता पूर्व्वपुरुषोपार्जिता तुला आसीत् । ताञ्च कस्यचिच्छ्रेष्ठिनो गृहे निक्षेपभूतां कृत्वा देशान्तरं प्रस्थितः । ततः सुचिरं कालं देशान्तरं यथेच्छया भ्रान्त्वा पुनः स्वपुरमागत्य तं श्रेष्ठिनमुवाच । भोः श्रेष्ठिन् ! दीयतां मे सा निक्षेपतुला । स आह, भो नास्ति सा त्वदीया तुला, मूषिकैर्भक्षिता, जीर्णधन आह, भोः श्रेष्ठिन् ! नास्ति दोषस्ते यदि मूषिकैर्भक्षितेति । ईदृगेवायं संसारः । न किञ्चिदत्र शाश्वतमस्ति, परमहं नद्यां स्नानार्थं गमिष्यामि, तत्त्वमात्मीयं शिशुमेनं धनदेवनामानं मया सह स्नानोपकरणहस्तं प्रेषयेति । सोऽपि चौर्य्यभयात्तस्य शङ्कितः स्वपुत्रमुवाच । वत्स ! पितृव्योऽयं तव स्नानार्थं नद्यां यास्यति, तद्गम्यतामनेन सार्द्धं स्नानोपकरणमादायेति, अहो साध्विदमुच्यते ।

न भक्त्या कस्यचित्कोऽपि प्रियं प्रकुरुते नरः ।

मुक्त्वा भयं प्रलोभं वा कार्य्यकारणमेव वा ॥ ४४६ ॥
तथाच, अत्यादरो भवेद्यत्र कार्य्यकारणवर्ज्जितः ।
तत्र शङ्का प्रकर्त्तव्या परिणामे सुखावहा ॥ ४४७ ॥

अथासौ वणिक्शिशुः स्नानोपकरणमादाय प्रहृष्टमना स्तेनाभ्यागतेन सह प्रस्थितः । तथानुष्ठिते वणिक् स्नात्वा तं शिशुं नदीगुहायां प्रक्षिप्य तद्द्वारं बृहच्छिलयाच्छाद्य सत्वरं गृहमागतः । पृष्टश्च तेन वणिजा, भो अभ्यागत ! कथ्यतां कुत्र मे शिशुर्यस्त्वया सह नदीं गत इति स आह, नदीतटात् श्येनेन हृत इति । श्रेष्ठ्याह, मिथ्यावादिन् ! किं क्वचिच्छ्येनो बालं हर्त्तुं शक्नोति ? तत्समर्पय मे सुतमन्यथा राजकुले निवेदयिष्यामीति । स आह, भोः सत्यवादिन् ! यथा श्येनो बालं न नयति तथा मूषिका अपि लोहभारघटितां तुलां न भक्षयन्ति, तदर्पय मे तुलां, यदि दारकेण प्रयोजनम् । एवं तौ विवदमानौ द्वावपि राजकुलं गतौ । तत्र श्रेष्ठी तारस्वरेण प्रोवाच, भो ! अब्रह्मण्यमनब्रह्मण्यम् !!! मम शिशुरनेन चौरेणापहृतः ; अथ धर्म्माधिकारिणस्तमूचुः । भोः ! समर्प्यतां श्रेष्ठिसुतः, स आह, किं करोमि, पश्यतो मे नदीतटाच्छ्येनेनापहृतः शिशुः । तच्छ्रुत्वा ते प्रोचुः । भो ! न सत्यमभिहितं भवता । किं श्येनः शिशुं हर्त्तुं समर्थो भवति ? स आह, भो भोः ! श्रूयतां मद्वचः ।

तुलां लोहसहस्रस्य यत्र खादन्ति मूषिकाः ।
राजंस्तत्र हरेच्छ्येनो बालकं नात्र संशयः ॥ ४४८ ॥

ते प्रोचुः । कथमेतत् ? ततः श्रेष्ठी सभ्यानामादितः सर्वं वृत्तान्तं निवेदयामास । ततस्तैर्विहस्य द्वावपि तौ परस्परं सम्बोध्य तुलाशिशुप्रदानेन सन्तोषितौ । अतोऽहं ब्रवीमि । तुलां लोहसहस्रस्येति ।

तन्मूर्ख ! सञ्जीवकप्रसादमसहमानेन त्वयैतत्कृतम् । अहो साध्विदमुच्यते,

प्रायेणात्र कुलान्वितं कुकुलजाः श्रीवल्लभं दुर्भगा
दातारं कृपणा ऋजूननृजवो वित्ते स्थितं निर्धनाः ।
वैरूप्योपहताश्च कान्तवपुषं धर्माश्रयं पापिनो ।
नानाशास्त्रविचक्षणं च पुरुषं निन्दन्ति मूर्खाः सदा॥ ४४९

तथाच, मूर्खाणां पण्डिता द्वेष्या निर्धनानां महाधनाः ।
व्रतिनः पापशीलानामसतीनां कुलस्त्रियः ॥ ४५० ॥

तन्मूर्ख ! त्वया हितमप्यहितं कृतम्, उक्तञ्च,

पण्डितोऽपि वरं शत्रुर्न मूर्खो हितकारकः ।
वानरेण हतो राजा विप्राश्चौरेण रक्षिताः ॥ ४५१ ॥

दमनक आह, कथमेतत् ? सोऽब्रवीत् ।

## कथा २२ ।

कस्यचिद्राज्ञो नित्यं वानरोऽतिभक्तिपरोऽङ्गसेवकोऽन्तःपुरेऽप्यप्रतिषिद्धप्रसरोऽतिविश्वासस्थानमभूत् । एकदा राज्ञो निद्रां गतस्य वानरे व्यजनं नीत्वा वायुं विदधति राज्ञो वक्षःस्थलोपरि मक्षिकोपविष्टा । व्यजनेन मुहुर्मुहुर्निषिध्य-

मानापि पुनःपुनस्तत्रैवोपविशति । ततस्तेन स्वभावचपलेन मूर्खेण वानरेण क्रुद्धेन सता तीव्रं खड्गमादाय तस्या उपरि प्रहारो विहितः । ततो मक्षिकोड्डीय गता तेन शतधारेणासिना राज्ञो वक्षो द्विधा जातं राजा मृतश्च । तस्माच्चिरायुरिच्छता नृपेण मूर्खोऽनुचरो न रक्षणीयः । अपरमेकस्मिन्नगरे कोऽपि विप्रो महाविद्वान् परं पूर्वजन्मयोगेन चौरो वर्त्तते । स तस्मिन् पुरेऽन्यदेशादागतांश्चतुरो विप्रान् बहूनि वस्तूनि विक्रीणतो दृष्ट्वा चिन्तितवान् । अहो ! केनोपायेनैषां धनं लभे, इति विचिन्त्य तेषां पुरोऽनेकानि शास्त्रोक्तानि सुभाषितानि चातिप्रियाणि मधुराणि वचनानि जल्पता तेषां मनसि विश्वासमुत्पाद्य सेवा कर्त्तुमारब्धा । अथवा साध्विदमुच्यते,

असती भवति सलज्जा क्षारं नीरञ्च शीतलं भवति ।
दम्भी भवति विवेकी प्रियवक्ता भवति धूर्त्तजनः ॥ ४५२ ॥

अथ तस्मिन् सेवां कुर्व्वति तैर्विप्रैः सर्व्ववस्तूनि विक्रीय बहुमूल्यानि रत्नानि क्रीतानि । ततस्तानि जङ्घामध्ये तत्समक्षं प्रक्षिप्य स्वदेशं प्रति गन्तुमुद्यमो विहितः । ततः स धूर्त्तविप्रस्तान् विप्रान् गन्तुमुद्यतान् प्रेक्ष्य चिन्ताव्याकुलितमनाः सञ्जातः । अहो ! धनमेतन्न किञ्चिन्मम चटितम् । अथैभिः सह यामि, पथि क्वापि विषं दत्त्वैतान्निहत्य सर्व्वरत्नानि गृह्णामि । इति विचिन्त्य तेषामग्रे सकरुणं विलप्येदमाह । भो ! मित्राणि यूयं मामेकाकिनं मुक्त्वा गन्

श्रुयताः । सखे मनो भवद्भिः सह स्नेहपाशेन बद्धं भवद्विरहनाम्नैवाकुलं सञ्जातं यथा धृतिं क्वापि न धत्ते । ततो यूयमनुग्रहं विधाय सहायभूतं मामपि सहैव नयत। तद्वचः श्रुत्वा ते करुणार्द्रचित्तास्तेन सममेव स्वदेशं प्रति प्रस्थिताः । अथाध्वनि तेषां पञ्चानामपि पल्लीपुरमध्ये व्रजतां ध्वाङ्क्षाः कथयितुमारब्धाः । रे रे किराता ! धावतधावत । सपादलक्षधनिनो यान्ति । एतान्निहत्य धनं नयत । ततः किरातैर्ध्वाङ्क्षवचनमाकर्ण्य सत्वरं गत्वा ते विप्रा लगुडप्रहारैर्जर्जरीकृत्य वस्त्राणि मोचयित्वा विलोकिताः परं धनं किञ्चिन्न लब्धम्। तदा तैः किरातैरभिहितम्। भोः पान्थाः! पुरा कदापि ध्वाङ्क्षवचनमनृतं नासीत्। ततो भवतां सन्निधौ क्वापि धनं विद्यते। तदर्पयत। अन्यथा सर्व्वेषामपि वधं विधाय चर्म्म विदार्य्य प्रत्यङ्गं प्रेक्ष्य धनं नेष्यामः। तदा तेषामीदृशं वचनमाकर्ण्य चौरविप्रेण मनसि चिन्तितम्। यदैषां विप्राणां वधं विधायाङ्गं विलोक्य रत्नानि नेष्यन्ति तदापि मां वधिष्यन्ति। ततोऽहं पूर्व्वमेवात्मानमरत्नं समर्प्यैतान् मुञ्चामि। उक्तञ्च,

मृत्योर्बिभेषि किं बाल! न स भीतं विमुञ्चति ।
अद्य वाब्दशतान्ते वा मृत्युर्वै प्राणिनां ध्रुवः ॥ ४५३ ॥

तथा च, गवार्थे ब्राह्मणार्थे च प्राणत्यागं करोति यः ।
सूर्य्यस्य मण्डलं भित्वा स याति परमां गतिम् ॥ ४५४ ॥

इति निश्चित्याभिहितम्। भोः किराता! यद्येवं ततो

मां पूर्वं निहत्य विलोकयत। ततस्तैस्तथानुष्ठिते तं धन-रहितमवलोक्यापरे चत्वारोऽपि मुक्ताः। अतोऽहं ब्रवीमि पण्डितोऽपि वरं शत्रुरिति। अथैवं संवदतोस्तयोः सञ्जीवकः क्षणमेकं पिङ्गलकेन सह युद्धं कृत्वा तस्य खरनखरप्रहाराभिहतो गतासुर्वसुधरापीठे निपपात। अथ तं गतासुमवलोक्य पिङ्गलकस्तद्गुणस्मरणार्द्रहृदयः प्रोवाच, भो! अयुक्तं मया पापेन कृतं सञ्जीवकं व्यापादयता यतो विश्वासघातादन्यन्नास्ति पापतरं कर्म। उक्तञ्च,

मित्रद्रोही कृतघ्नश्च यश्च विश्वासघातकः।
ते नरा नरकं यान्ति यावच्चन्द्रदिवाकरौ॥ ४५५॥

भूमिक्षये राजविनाशएव भृत्यस्य वा बुद्धिमतो विनाशे।
न युक्तमुक्तं ह्यनयोः समत्वं नष्टापिभूमिःसुलभा न भृत्याः॥४५६॥

तथा मया सभामध्ये स सदैव प्रशंसितः। तत् किं कथयिष्यामि तेषामग्रतः। उक्तञ्च,

उक्तो भवति यः पूर्वं गुणवानिति संसदि।
न तस्य दोषो वक्तव्यः प्रतिज्ञाभङ्गभीरुणा॥ ४५७॥

एवंविधं प्रलपन्तं दमनकः समेत्य सहर्षमिदमाह। देव! कातरतमस्तवैष न्यायो यद्द्रोहकारिणं शष्पभुजं हत्वेत्थं शोचसि। तन्नैतदुपपन्नं भूभुजाम्, उक्तञ्च,

पिता वा यदि वा भ्राता पुत्रो भार्य्याथवा सुहृत्।
प्राणद्रोहं यदा गच्छेद्धन्तव्यो नास्ति पातकम्॥ ४५८॥

तथाच, राजा घृणी ब्राह्मणः सर्वभक्षी

स्त्री चात्रपा दुष्टमतिः सहायः ।
प्रेष्यः प्रतीपोऽधिकृतः प्रमादी
त्याज्या अमी यश्च कृतं न वेत्ति ॥ ४५८ ॥

अपिच, सत्यानृता च परुषा प्रियवादिनी च
हिंस्रा दयालुरपि चार्थपरा वदान्या ।
भूरिव्यया प्रचुरवित्तसमागमा च
वेश्याङ्गनेव नृपनीतिरनेकरूपा ॥ ४६० ॥

अपिच, अकृतोपद्रवः कश्चिन्महानपि न पूज्यते ।
पूजयन्ति नरा नागान्नतार्क्ष्यं नागघातिनम् ॥ ४६१ ॥

तथाच, अशोच्यानन्वशोच त्वं प्रज्ञावादांश्चभाषसे
गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः ॥ ४६२ ॥

एवं तेन सम्बोधितः पिङ्गलकः सञ्जीवकशोकं त्यक्त्वा दमनकसाचिव्येन राज्यमकरोत् ॥

इति श्रीविष्णुशर्म्मविरचिते पञ्चतन्त्रे मित्रभेदोनाम प्रथमं तन्त्रं समाप्तम् ।

---

अथेदमारभ्यते मित्रसम्प्राप्तिर्नाम द्वितीयं तन्त्रं तस्यायमाद्यः श्लोकः।

असाधना अपि प्राज्ञा बुद्धिमन्तो बहुश्रुताः।
साधयन्त्याशु कार्याणि काकाखुमृगकूर्मवत्॥ १ ॥

तद्यथानुश्रूयते।

अस्ति दाक्षिणात्ये जनपदे महिलारोप्यं नाम नगरम्। तस्य नातिदूरस्थो महोच्छ्रायवान् नानाविहङ्गोपभुक्तफलः कीटैरावृतकोटरश्छायाश्वासितपथिकजनसमूहो न्यग्रोधपादपो महान्। अथवा युक्तम्।

छायासुप्तमृगः शकुन्तिनिवहैर्विष्वग्विलुप्तच्छदः
कीटैरावृतकोटरः कपिकुलैः स्कन्धे कृतप्रश्रयः।
विश्रब्धं मधुपैर्निपीतकुसुमः श्लाघ्यः स एव द्रुमः
सर्वाङ्गैर्बहुसत्त्वसङ्गसुखदो भूभारभूतोऽपरः॥ २ ॥

तत्र च लघुपतनको नाम वायसः प्रतिवसति स्म। स कदाचित्प्राणयात्रार्थं पुरमुद्दिश्य प्रचलितो यावत्पश्यति तावज्जालहस्तोऽतिकृष्णतनुः स्फुटितचरण ऊर्ध्वकेशो यमकिङ्कराकारो नरः सम्मुखो बभूव। अथ तं दृष्ट्वा शङ्कितमना व्यचिन्तयत्। यदयं दुरात्मा ममाश्रयवटपादपसम्मुखोऽभ्येति। तन्न ज्ञायते किमद्य वटवासिनां विहङ्गमानां संक्षयो भविष्यति न वा। एवं बहुविधं विचिन्त्य तत्क्षणाद्वि

इत्य तमेव वटपादपं गत्वा सर्वान् विहङ्गमान् प्रोवाच, भोः! अयं दुरात्मा लुब्धको जालतण्डुलहस्तः समभ्येति। तत्सर्वथा तस्य न विश्वसनीयम्। एषं जालं प्रसार्य्य तण्डुलान् प्रक्षेप्स्यति। ते तण्डुला भवद्भिः सर्वैरपि कालकूटसदृशा द्रष्टव्याः। एवं वदतस्तस्य स लुब्धकस्तत्र वटतल आगत्य जालं प्रसार्य्य सिन्दुवारसदृशांस्तण्डुलान् प्रक्षिप्य नातिदूरं गत्वा निभृतः स्थितः। अथ ये पक्षिणस्तत्र स्थितास्ते लघुपतनकवाक्यार्गलया निवारितास्तांस्तण्डुलान् हालाहलाङ्कुरानिव वीक्षमाणा निभृतास्तस्थुः। अत्रान्तरे चित्रग्रीवो नाम कपोतराजः सहस्रपरिवारः प्राणयात्रार्थं परिभ्रमंस्तांस्तण्डुलान् दूरतोऽपि पश्यंल्लघुपतनकेन निवार्य्यमाणोऽपि जिह्वालौल्याद्भक्षणार्थमपतत्सपरिवारो निबद्ध। साध्विदमुच्यते।

जिह्वालौल्यप्रसक्तानां जलमध्यनिवासिनाम्।
अचिन्तितो वधोऽज्ञानां मीनानामिव जायते॥ ३॥

अथवा दैवप्रतिकूलतया भवत्येवं; न तस्य दोषोऽस्ति, उक्तञ्च,

पौलस्त्यः कथमन्यदारहरणे दोषं न विज्ञातवान्?
रामेणापि कथं न हेमहरिणस्यासम्भवो लक्षितः?
अक्षैश्चापि युधिष्ठिरेण सहसा प्राप्तो ह्यनर्थः कथं?
प्रत्यासन्नविपत्तिमूढमनसां प्रायो मतिः क्षीयते॥ ४॥

तथाच, कृतान्तपाशबद्धानां दैवोपहतचेतसाम्।
बुद्धयः कुब्जगामिन्यो भवन्ति महतामपि॥ ५॥

अत्रान्तरे लुब्धकास्तान् विदित्वा विज्ञाय प्रहृष्टमनाः प्रोत्थाय यष्टिहस्तः प्रधावितः। चित्रग्रीवोऽप्यात्मानं सपरिवारं बद्धं मत्वा लुब्धकमायान्तं दृष्ट्वा तान् कपोतानूचे। अहो! न भेतव्यम्, उक्तञ्च,

व्यसनेष्वेव सर्वेषु यस्य बुद्धिर्न हीयते।
स तेषां पारमभ्येति तत्प्रभावादसंशयम् ॥ ६ ॥
सम्पत्तौ च विपत्तौ च महतामेकरूपता।
उदये सविता रक्तो रक्तश्चास्तमये तथा ॥ ७ ॥

तत्सर्वे वयं हेलयोड्डीय सपाशजाला अदर्शनं गत्वा मुक्तिं प्राप्नुमः। नो चेद्भयविक्लवाः सन्तो हेलया समुत्पातं न करिष्यथ ततो मृत्युमवाप्स्यथ। उक्तञ्च,

तन्तवोऽप्यायता नित्यं तन्तवो बहुलाः समाः।
बहून् बहुत्वादायासान् सहन्तीत्युपमा सताम् ॥ ८ ॥

तथानुष्ठिते लुब्धको जालमादायाकाशे गच्छतां तेषां पश्चाद् भूमिस्थोऽपि पर्यधावत्। ततः ऊर्ध्वाननः श्लोकमेनमपठत्।

जालमादाय गच्छन्ति संहताः पक्षिणोऽप्यमी।
यावच्च विवदिष्यन्ते पतिष्यन्ति न संशयः ॥ ९ ॥

लघुपतनकोऽपि प्राणयात्राक्रियां त्यक्त्वा किमत्र भविष्यति कुतूहलात्तत्पृष्ठलग्नोऽनुसरति। अथ दृष्टेरगोचरतां गतान् विज्ञाय लुब्धको निराशः श्लोकमपठन्निवृत्तश्च॥
नहि भवति यन्न भाव्यं भवति च भाव्यं यत्नेन।

करतलगतमपि नश्यति यस्य हि भवितव्यता नास्ति ॥१०॥
तथाच, पराङ्मुखे विधौ चेत्स्यात्कथञ्चिद्द्रविणोदयः।

तत्सोऽन्यदपि संगृह्य याति शङ्खनिधिर्यथा ॥ ११ ॥

तदास्तां तावद्विहङ्गामिषालोभो यावत्। कुटुम्बवर्त्तनोपायभूतं जालमपि मे नष्टम्। चित्रग्रीवोऽपि लुब्धकमदर्शनीभूतं ज्ञात्वा तानुवाच। भो! निवृत्तः स दुरात्मा लुब्धकः। तत्सर्वैरपि स्वस्थैर्गम्यतां महिलारोप्यस्य प्रागुत्तरदिग्भागे। तत्र मम सुहृद्धिरण्यको नाम मूषकः, सर्वेषां पाशच्छेदं करिष्यति। उक्तञ्च,

सर्वेषामेव मर्त्यानां व्यसने समुपस्थिते।
वाङ्मात्रेणापि साहाय्यं मित्रादन्यो न संदधे ॥ १२ ॥

एवं ते कपोताश्चित्रग्रीवेण सम्बोधिता महिलारोप्ये नगरे हिरण्यकविलदुर्गं प्रापुः। हिरण्यकोऽपि सहस्रमुखविलदुर्गं प्रविष्टःसन्नकुतोभयः सुखेनास्ते, अथवा साध्विदमुच्यते।

अनागतं भयं दृष्ट्वा नीतिशास्त्रविशारदः।
अवसन् मूषकस्तत्र कृत्वा शतमुखं बिलं ॥ १३ ॥

दंष्ट्राविरहितः सर्पो मदहीनो यथा गजः।
सर्वेषां जायते वश्यो दुर्गहीनस्तथा नृपः ॥ १४ ॥

तथाच, न गजानां सहस्रेण न च लक्षेण वाजिनाम्।
तत्कर्म्म सिध्यते राज्ञां दुर्गेणैकेन यद्रणे ॥ १५ ॥
शतमेकोऽपि सन्धत्ते प्राकारस्थो धनुर्धरः।

तस्माद्दुर्गं प्रशंसन्ति नीतिशास्त्रविदो जनाः ॥ १६ ॥

अथ चित्रग्रीवो विलमासाद्य तारस्वरेण प्रोवाच, भो मित्र हिरण्यक ! सत्वरमागच्छ । महती मे व्यथा वर्त्तते । तच्छ्रुत्वा हिरण्यकोऽपि विलदुर्गान्तर्गतः सन् प्रोवाच, भोः ! को भवान् ? किमर्थमायातः ? किं कारणम् ? कीदृक् ते व्यसनावस्थानम् ? तत् कथ्यतामिति । तच्छ्रुत्वा चित्रग्रीव आह, भो ! चित्रग्रीवो नाम कपोतराजोऽहं ते सुहृत् । तत्सत्वरमागच्छ, गुरुतरं प्रयोजनमस्ति । तदाकर्ण्य पुलकिततनुः प्रहृष्टात्मा स्थिरमनास्त्वरमाणो निष्क्रान्तः । अथवा साध्विदमुच्यते ।

सुहृदः स्नेहसम्पन्ना लोचनानन्ददायिनः ।
गृहे गृहवतां नित्यं नागच्छन्ति महात्मनाम् ॥ १७ ॥
आदित्यस्योदयं जाततांम्बूल भारती कथा ।
इष्टा भार्या सुमित्रं च अपूर्व्वाणि दिने दिने ॥ १८ ॥
सुहृदो भवने यस्य समागच्छन्ति नित्यशः ।
चित्ते च तस्य सौख्यस्य न किञ्चित् प्रतिमं सुखम् ॥ १९ ॥

अथ चित्रग्रीवं सपरिवारं पाशबद्धमालोक्य हिरण्यकः सविषादमिदमाह । भोः किमेतत् ? स आह, भो ! जानन्नपि किं पृच्छसि ? उक्तञ्च यतः,

यस्माच्च येन च यदा च यथा च यच्च
यावच्च यत्र च शुभाशुभमात्मकर्म्म ।
तस्माच्च तेन च तदा च तथा च तच्च

तावच्च तत्र च कृतान्तवशादुपैति ॥ २० ॥

तत्प्राप्तं मयैतद् बन्धनं जिह्वालौल्यात्। साम्प्रतं त्वं पाशविमोचं कुरु माविलम्ब। तदाकर्ण्य हिरण्यकः प्राह,

अर्द्धार्द्धाद्योजनशतादामिषं वीक्षते खगः।
सोऽपि पार्श्वस्थितं दैवाद्बन्धनं न च पश्यति ॥ २१ ॥

तथाच, रविनिशाकरयोर्ग्रहपीड़नं
गजभुजङ्गविहङ्गमबन्धनम्।
मतिमतां च निरीक्ष्य दरिद्रतां
विधिरहो बलवानिति मे मतिः ॥ २२ ॥

तथाच, व्योमैकान्तविहारिणोऽपि विहगाः सम्प्राप्नुवन्त्या पदं
बध्यन्ते निपुणैरगाधसलिलान्मीनाः समुद्रादपि।
दुर्नीतं किमिहास्ति किं च सुकृतं कः स्थानलाभे गुणः
कालः सर्व्वजनान् प्रसारितकरो गृह्णाति दूरादपि ॥ २३ ॥

एवमुक्त्वा चित्रग्रीवस्य पाशं च्छेत्तुमुद्यतं स तमाह। भद्र! मा मैवं कुरु, प्रथमं मम भृत्यानां पाशच्छेदं कुरु तदनु ममापि च। तच्छ्रुत्वा कुपितो हिरण्यकः प्राह। भो! न युक्तमुक्तं भवता यतः स्वामिनोऽनन्तरं भृत्याः। स आह, भद्र! मा मैवं वद, मदाश्रयाः सर्व्वे एते वराकाः, अपरं स्वकुटुम्बं परित्यज्य समागताः। तत्कथमेतावन्मात्रमपि सम्मानं न करोमि, उक्तञ्च,

यः सम्मानं सदा धत्ते भृत्यानां क्षितिपोऽधिकम्।
वित्ताभावेऽपि तं दृष्ट्वा ते त्यजन्ति न कर्हिचित् ॥ २४ ॥

तथाच, विश्वासः सम्पदां मूलं तेन यूथपतिर्गजः ।
सिंहो मृगाधिपत्येऽपि न मृगैःपरिवार्य्यते ॥ २५ ॥
अपरं मम कदाचित्पाशच्छेदं कुर्व्वतस्ते दन्तभङ्गो भवति । अथवा दुरात्मा लुब्धकः समभ्येति । तन्नूनं मम नरकपात एव । उक्तञ्च,

सदाचारेषु भृत्येषु संसीदत्सु च यः प्रभुः ।
सुखी स्यान्नरकं याति परत्रेह च सीदति ॥ २६ ॥

तच्छ्रुत्वा प्रहृष्टो हिरण्यकः प्राह । भो ! वेद्म्यहं राजधर्म्मम् । परं मया तव परीक्षा कृता । तत्सर्व्वेषां पूर्व्वं पाशच्छेदं करिष्यामि । भवानप्यनेन विधिना बहुकपोत-परिवारो भविष्यति, उक्तञ्च,

कारुण्यं संविभागश्च यस्य भृत्येषु सर्व्वदा ।
सम्भवेत्स महीपालस्त्रैलोक्यस्यापि रक्षणे ॥ २७ ॥

एवमुक्त्वा सर्व्वेषां पाशच्छेदं कृत्वा हिरण्यकश्चित्रग्रीवं प्राह । मित्र ! गम्यतामधुना स्वाश्रयं प्रति, भूयोऽपि व्यसने प्राप्ते समागन्तव्यम् । इति तान् सम्प्रेष्य पुनरपि दुर्गं प्रविष्टः । चित्रग्रीवोऽपि सपरिवारः स्वाश्रयमगमत् । अथवा साध्विदमुच्यते,

मित्रवान्साधयत्यर्थान् दुःसाध्यानपि वै यतः ।
तस्मान्मित्राणि कुर्व्वीत समानान्येव चात्मनः ॥ २८ ॥

लघुपतनकोऽपि वायसः सर्व्वं तं चित्रग्रीवमन्धमोक्षमवलोक्य विस्मितमना व्यचिन्तयत् । अहो ! बुद्धिरस्य हिरण्य-

कस्य शक्तिः दुर्गसामग्री च तदीदृगेव विधिविहङ्गाना बन्धनमोचात्मकः । अहं च न कस्यचिद्विश्वसिमि चलप्रकृतिश्च । तथाप्येनं मित्रं करोमि । उक्तञ्च,

अपि सम्पूर्णतायुक्तैः कर्त्तव्याः सुहृदो बुधैः ।
नदीशः परिपूर्णोऽपि चन्द्रोदयमपेक्षते ॥ २८ ॥

एवं सम्प्रधार्य्य पादपादवतीर्य्य विलद्वारमाश्रित्य चित्रग्रीववच्छब्देन हिरण्यकं समाहूतवान् । एह्येहि भो हिरण्यक । एहि । तच्छब्दं श्रुत्वा हिरण्यको व्यचिन्तयत् । किमन्योऽपि कश्चित्कपोतो बन्धनशेषस्तिष्ठति येन मां व्याहरति । आह च, भोः को भवान् ? स आह, अहं लघुपतनको नाम वायसः । तत् श्रुत्वा विशेषादन्तर्लीनो हिरण्यक आह, भो ! द्रुतं गम्यतामस्मात्स्थानात् , वायस आह, तव पार्श्वे गुरुकार्य्येण समागतः, तत्किं न क्रियते मया सह दर्शनम् ; हिरण्यक आह, न मेऽस्ति त्वया सह सङ्गमेन प्रयोजनमिति । स आह, भो ! चित्रग्रीवस्य मया तव सकाशात्पाशमोक्षणं दृष्टम् तेन मम महती प्रीतिः सञ्जाता । तत्कदाचिन्ममापि बन्धने जाते तव पार्श्वान्मुक्तिर्भवति । तत्क्रियतां मया सह मैत्री । हिरण्यक आह, अहो ! त्वं भोक्ता । अहं ते भोज्यभूतः । तत् का त्वया सह मम मैत्री ? तद्गम्यतां मैत्रीविरोधभावात् । उक्तञ्च,

ययोरेव समं वित्तं ययोरेव समं कुलम् ।
तयोर्मैत्री विवाहश्च न तु पुष्टविपुष्टयोः ॥ ३० ॥

तथाच, यो मित्रं कुरुते मूढ़े आत्मनोऽसदृशं कुधीः।
हीनं वाप्यधिकं वापि हास्यतां यात्यसौ जनः॥ २१॥

तद्गम्यतामिति। वायस आह, भो हिरण्यक! तव दुर्गद्वार उपविष्टः। यदि त्वं मैत्रीं न करोषि ततोऽहं प्राणमोचनं तवाग्रे करिष्यामि। अथवा प्रायोपवेशनं स्यादिति। हिरण्यक आह, भो। त्वया वैरिणा सह कथं मैत्रीं करोमि? उक्तञ्च,

वैरिणा न हि सन्दध्यात्सुश्लिष्टेनापि सन्धिना।
सुतप्तमपि पानीयं शमयत्येव पावकम्॥ २२॥

वायस आह, भो! त्वया सह दर्शनमपि नास्ति कुतो वैरम्? तत्किमनुचितं वदसि, हिरण्यक आह, द्विविधं वैरं भवति सहजं कृत्रिमं च। तत्सहजवैरी त्वमस्माकम् उक्तञ्च,

कृत्रिमं नाशमभ्येति वैरं द्राक्कृत्रिमैर्गुणैः।
प्राणदानं विना वैरं सहजं याति न क्षयम्॥ २३॥

वायस आह, भो। द्विविधस्य वैरस्य लक्षणं श्रोतुमिच्छामि। तत्कथ्यताम्। हिरण्यक आह, भोः! कारणेन निर्वृत्तं कृत्रिमम्। तत्तदर्होपकारकरणाद्गच्छति। स्वाभाविकं पुनः कथमपि न गच्छति। तद्यथा नकुलसर्पाणां, शष्पभुङ्नखायुधानां, जलवह्नी, देवदैत्यानां, सारमेयमार्जाराणाम्, ईश्वरदरिद्राणां, सपत्नीनां, लुब्धकहरिणानां श्रोत्रियभ्रष्टक्रियाणां, मूर्खपण्डितानां, पतिव्रताकुलटानां, सज्जनदुर्जनानाम्। न

सेवकेनापि व्यापादितः। तथापि प्राणान्संतापयन्ति स्म।
वायस आह। कारणान्मित्रतां याति कारणादेति शत्रुताम्।
तस्मान्मित्रत्वमेवात्र योज्यं वैरं न धीमता॥ ३४॥

तस्मात् कुरु मया सह समागमं मित्रधर्मार्थम्। हिर-
ण्य आह, भोः! श्रूयतां नीतिसर्वस्वम्।

सकृद्दुष्टमपीष्टं यः पुनः सन्धातुमिच्छति।
स मृत्युमुपगृह्णाति गर्भमश्वतरी यथा॥ ३५॥

अथवा गुणवानहं न मे कश्चिद्वैरयातनां करिष्यत्येतदपि
न भाष्यम्। उक्तञ्च,

सिंहो व्याकरणस्य कर्त्तुरहरत्प्राणान् प्रियान् पाणिने
र्मीमांसाकृतमुन्ममाथ सहसा हस्ती मुनिं जैमिनिम्।
छन्दोज्ञाननिधिं जघान मकरो वेलातटे पिङ्गल-
मज्ञानावृतचेतसामतिरुषां कोऽर्थस्तिरश्चां गुणैः?॥ ३६॥

वायस आह, अस्त्येतत्तथापि श्रूयताम्,

उपकाराच्च लोकानां निमित्तान्मृगपक्षिणाम्।
भयाल्लोभाच्च मूर्खाणां मैत्री स्याद्दर्शनात्सताम्॥ ३७॥

मृद्घटइव सुखभेद्यो दुःसन्धानश्च दुर्जनो भवति।
सुजनस्तु कनकघटइव दुर्भेदःसुकरसन्धिश्च॥ ३८॥

इक्षोरग्रात् क्रमशःपर्वणि पर्वणि यथा रसविशेषः।
तद्वत् सज्जनमैत्री विपरीतानां तु विपरीतता॥३९॥

तथाच,आरम्भगुर्वी क्षयिणी क्रमेण लघ्वीपुरावृद्धिमतीच पश्चात्।
दिनस्य पूर्वार्द्धपरार्द्धभिन्ना छायेव मैत्री खलु सज्जनानाम्॥४०॥

-तत्राप्यहम् अपरं त्वां शपथादिभिर्निर्भयं करिष्यामि। स आह, न मेऽस्ति ते शपथैः प्रत्ययः। उक्तञ्च,

शपथैः सन्धितस्यापि न विश्वासं व्रजेद्रिपोः।
श्रूयते शपथं कृत्वा वृत्रः शक्रेण सूदितः॥ ४१॥
न विश्वासं विना शत्रुर्देवानामपि सिध्यति।
विश्वासात्त्रिदशेन्द्रेण दितेर्गर्भो विदारितः॥ ४२॥

अन्यच्च, बृहस्पतेरपि प्राज्ञस्तस्मान्नैवात्र विश्वसेत्।
य इच्छेदात्मनो वृद्धिमायुष्यञ्च सुखानि च॥ ४३॥

तथाच, सुसूक्ष्मेणापि रन्ध्रेण प्रविश्याभ्यन्तरं रिपुः।
नाशयेच्च शनैः पश्चात् प्लवं सलिलपूरवत्॥ ४४॥
न विश्वसेदविश्वस्ते विश्वस्तेऽपि न विश्वसेत्।
विश्वासाद्भयमुत्पन्नं मूलान्यपि निकृन्तति॥ ४५॥
न वध्यते ह्यविश्वस्तो दुर्बलोऽपि बलोत्कटैः।
विश्वस्तास्त्वाशु वध्यन्ते बलवन्तोऽपि दुर्बलैः॥ ४६॥
सुकृत्यं विष्णुगुप्तस्य मित्राप्तिर्भार्गवस्य च।
बृहस्पतेरविश्वासो नीतिसन्धिस्त्रिधा स्थितः॥ ४७॥

तथा च, महताप्यर्थसारेण यो विश्वसिति शत्रुषु।
भार्यासु सुविरक्तासु तदन्तं तस्य जीवितम्॥ ४८॥

तच्छ्रुत्वा लघुपतनकोऽपि निरुत्तरश्चिन्तयामास, अहो! बुद्धिप्रागल्भ्यमस्य नीतिविषये। अथवा त एवास्योपरि मैत्रीपक्षपातः। स आह, भो हिरण्यक!

सतां साप्तपदं मैत्रमित्याहुर्विबुधा जनाः।

तस्मात्त्वं मित्रतां प्राप्तो वचनं मम तच्छृणु ॥ ४८ ॥

दुर्गस्थेनापि त्वया मया सह नित्यमेवालापो गुणदोषसुभाषितगोष्ठीकथाः सर्व्वदा कर्त्तव्या यद्येवं न विश्वसिषि। तच्छ्रुत्वा हिरण्यकोऽपि व्यचिन्तयत्, विदग्धवचनोऽयं दृश्यते लघुपतनकः सत्यवाक्यश्च, तद्युक्तमनेन मैत्रीकरणम्। परं कदाचिन्मम दुर्गे चरणपातोऽपि न कार्य्यः। उक्तञ्च,

भीतभीतः पुरा शत्रुर्मन्दं मन्दं विसर्पति।
भूमौ प्रहेलया पश्चाज्जारहस्तोऽङ्गनास्विव ॥५०॥

तच्छ्रुत्वा वायस आह, भद्र! एवं भवतु। ततः प्रभृति द्वौ तावपि सुभाषितगोष्ठीसुखमनुभवन्तौ तिष्ठतः। परस्परं कृतोपकारौ कालं नयतः। लघुपतनकोऽपि मांसशकलानि मेध्यानि बलिशेषाण्यन्यानि वत्सलाहृतानि पक्वान्नविशेषाणि हिरण्यकार्थमानयति। हिरण्यकोऽपि तण्डुलानन्यांश्च भक्ष्यविशेषांल्लघुपतनकार्थं रात्रावाहृत्य तत्कालायातस्यार्पयति। अथवा युज्यते द्वयोरप्येतत्। उक्तञ्च,

ददाति प्रतिगृह्णाति गुह्यमाख्याति पृच्छति।
भुङ्क्ते भोजयते चैव षड्विधं प्रीतिलक्षणम् ॥५१॥

नोपकारं विना प्रीतिः कथञ्चित्कस्यचिद्भवेत्।
उपयाचितदानेन यतो देवा अभीष्टदाः ॥ ५२ ॥

तावत्प्रीतिर्भवेल्लोके यावद्दानं प्रदीयते।
वत्सः क्षीरक्षयं दृष्ट्वा परित्यजति मातरम् ॥ ५३ ॥

पश्य दानस्य माहात्म्यं सद्यः प्रत्ययकारकम्।

यत्प्रभावादपि द्वेषी मित्रतां याति तत्क्षणात् ॥ ५४ ॥
पुत्रादपि प्रियतरं खलु तेन दानं
मन्ये पशोरपि विवेकविवर्जितस्य ।
दत्ते खलेऽपि निखिलं खलु येन दुग्धं
नित्यं ददाति महिषी ससुतापि पश्य ॥ ५५ ॥

किं बहुना, प्रीतिं निरन्तरां कृत्वा दुर्भेद्यां नखमांसवत् ।
मूषको वायसश्चैव गतौ कृत्रिममित्रताम् ॥ ५६ ॥

एवं स मूषकस्तदुपकाररञ्जितस्तथा विश्वस्तो यथा तस्य पक्षमध्ये प्रविष्टस्तेन सह सर्वदैव गोष्ठीं करोति। अथान्यस्मिन्नहनि वायसोऽश्रुपूर्णनयनः समभ्येत्य सगद्गदं तमुवाच, भद्र हिरण्यक! विरक्तिः सञ्जाता मे साम्प्रतं देशस्यास्योपरि, तदन्यत्र यास्यामि। हिरण्यक आह, भद्र! किं विरक्तेः कारणम्? स आह, भद्र! श्रूयताम्। अत्र देशे महत्यानावृष्ट्या दुर्भिक्षं सञ्जातम्। दुर्भिक्षत्वाज्जनो बुभुक्षापीडितः कोऽपि बलिमात्रमपि न प्रयच्छति। अपरं गृहे गृहे बुभुक्षितजनैर्विहङ्गानां बन्धनाय पाशाः प्रगुणीकृताः सन्ति। अहमप्यायुःशेषतया पाशेन बद्ध उद्धरितोऽस्मि— एतद्विरक्तेः कारणम्। तेनाहं विदेशं चलित इति बाष्पमोक्षं करोमि। हिरण्यक आह, अथ भवान् क्व प्रस्थितः? स आह, अस्ति दक्षिणापथे वनगहनमध्ये महासरः। तत्र त्वत्तोऽधिकः परमसुहृत् कूर्मो मन्थरको नाम। स च मे मत्स्यमांसखण्डानि दास्यति, तद्भक्षणात्तेन सह सुभाषित-

गोष्ठीसुखमनुभवन् सुखेन कालं नेष्यामि । नाहमत्र विह-
गानां पाशबन्धनेन चयं द्रष्टुमिच्छामि । उक्तञ्च,

अनावृष्टिहते देशे सस्ये च प्रलयं गते ।
धन्यास्तात न पश्यन्ति देशभङ्गं कुलक्षयम् ॥ ५७ ॥

कोऽतिभारः समर्थानां ? किं दूरं व्यवसायिनाम् ?
को विदेशः सविद्यानां ? कः परः प्रियवादिनाम् ? ॥ ५८ ॥

विद्वत्वञ्च नृपत्वञ्च नैव तुल्यं कदाचन ।
स्वदेशे पूज्यते राजा विद्वान् सर्व्वत्र पूज्यते ॥ ५९ ॥

हिरण्यक आह, यद्येवं तदहमपि त्वया सहागमि-
ष्यामि । ममापि महद्दुःखं वर्त्तते । वायस आह, भोः ।
तव किं दुःखम् ? तत्कथय । हिरण्यक आह, भो ! बहु वक्त-
व्यमस्त्यत्र विषये । तत्रैव गत्वा सर्व्वं सविस्तरं कथयिष्यामि ।
वायस आह, अहं तावदाकाशगतिस्तत्कथं भवतो मया
सह गमनम् । स आह, यदि मे प्राणान् रक्षसि तदा
पृष्ठमारोप्य मां तत्र प्रापयिष्यसि । नान्यथा मम गति-
रस्ति । तत् श्रुत्वा सानन्दं वायस आह, यद्येवं तद्धन्योऽहं
भवतापि सह तत्र कालं नयामि । अहं सम्पातादिकानष्टा-
वुड्डीनगतिविशेषान् वेद्मि । तत्समारोह मम पृष्ठं, येन सुखेन
त्वां तत्सरः प्रापयामि । हिरण्यक आह, उड्डीनानां नामानि
श्रोतुमिच्छामि, स आह,

सम्पातं विप्रपातञ्च महापातं निपातनम् ।
वक्रं तिर्य्यक् तथा चोर्द्ध्वमष्टमं लघुसंज्ञकम् ॥ ६० ॥

भिक्षाटनं कृत्वा प्राणयात्रां समाचरति। भिक्षाशेषञ्च तत्रैव भिक्षापात्रे निधाय तद्भिक्षापात्रं नागदन्ते विलम्ब्य पश्चाद्रात्रौ स्वपिति। प्रत्यूषे च तदन्नं कर्म्मकराणां दत्त्वा सम्यक् तत्रैव देवतायतने सम्मार्ज्जनोपलेपमण्डनादिकं समाज्ञापयति। अन्यस्मिन्नहनि मम बान्धवैर्निवेदितम्, स्वामिन्! मठायतने सिद्धमन्नं मूषकभयात्तत्रैव भिक्षापात्रे निहितं नागदन्तेऽवलम्बितं तिष्ठति सदैव, तद्वयं भक्षयितुं न शक्नुमः। स्वामिनः पुनरगम्यं किमपि नास्ति। तत् किं वृथाटनेनान्यत्र? अद्य तत्र गत्वा यथेच्छं भुञ्ज्महे तव प्रसादात्। तदाकर्ण्याहं सकलयूथपरिवृतस्तत्क्षणादेव तत्र गतः। उत्पत्य च तस्मिन् भिक्षापात्रे समारूढः। तत्र भक्ष्य विशेषाणि सेवकानां दत्त्वा पश्चात् स्वयमेव भक्षयामि, सर्व्वेषां तृप्तौ जातायां भूयः स्वगृहं गच्छामः। एवं नित्यमेव तदन्नं भक्षयामि। परिव्राजकोऽपि यथाशक्ति रक्षति। परं यदैव निद्रान्तरितो भवति, तदाहं तत्रारुह्यात्मकृत्यं करोमि। अथ कदाचित् तेन मम रक्षणार्थं महान् यत्नः कृतः। जर्ज्जर-वंशः समानीत.। तेन सुप्तोऽपि मम भयाद्भिक्षापात्रं ताडयति। अहमप्यभक्षितेऽप्यन्ने प्रहारभयादपसर्पामि। एवं तेन सह सकलां रात्रिं विग्रहपरस्य कालो व्रजति। अथान्यस्मिन्नहनि तस्य मठे बृहत्स्फिङ्नामा परिव्राजकस्तस्य सुहृत्तीर्थयात्राप्रसङ्गेन पान्थः प्राघूर्णकः समायातः, तं दृष्ट्वा प्रत्युत्थानविधिना सम्भाव्य प्रतिपत्तिपूर्व्वकमभ्यागतक्रियया नियो-

जितः। ततश्च रात्रावेकत्र कुशसंस्तरे द्वावपि प्रसुप्तौ धर्म्म-कथां कथयितुमारब्धौ। अथ बृहत्स्फिक्कथागोष्ठीषु स ताम्र-चूडो मूषकत्रासार्थं व्याक्षिप्तमना जर्ज्जरवंशेन भिक्षापात्रं ताड़यन् तस्य शून्यं प्रतिवचनं प्रयच्छति। तन्मया न किञ्चि-दुदाहरति। अथासावभ्यागतः परं कोपमुपागतस्तमुवाच, भो ताम्रचूड़! परिज्ञातस्त्वं सम्यङ् न सुहृत्, तेन मया सह साह्लादं न जल्पसि। तद्रात्रावपि त्वदीयं मठं त्यक्त्वा-न्यत्र मठे यास्यामि। उक्तञ्च,

एह्यागच्छ समाश्रयासनमिदं कस्माच्चिराद्दृश्यसे ?
का वार्त्ता ? अतिदुर्ब्बलोऽसि ? कुशलं ? प्रीतोऽस्मि ते दर्शनात्।
एवं ये समुपागतान् प्रणयिनः प्रह्लादयन्त्यादरात्
तेषां युक्तमशङ्कितेन मनसा हर्म्याणि गन्तुं सदा ॥ ६७॥

गृही यत्रागतं दृष्ट्वा दिशो वीक्षेत वाप्यधः।
तत्र ये सदने यान्ति ते शृङ्गरहिता वृषाः ॥ ६८ ॥
नाभ्युत्थानक्रिया यत्र नालापा मधुराक्षराः।
गुणदोषकथा नैव तत्र हर्म्यं न गम्यते ॥ ६९ ॥

तदेकमठप्राप्त्यापि त्वं गर्वितः, त्यक्तः सुहृत्स्नेहः। नैतद्वेत्सि यत्त्वया मठाश्रयव्याजेन नरकोपार्ज्जनं कृतम्। उक्तञ्च, नरकाय मतिस्ते चेत्पौरोहित्यं समाचर।

वर्षं यावत् किमन्येन मठचिन्तां दिनत्रयम् ॥ ७० ॥

तन्मूर्ख! शोचितव्यस्त्वं गर्वं गतः। तदहं त्वदीयं मठं परित्यज्य यास्यामि। अथ तत् श्रुत्वा भयत्रस्तमनास्ताम्रचूड़

स्तमुवाच, भो भगवन् ! मैवं वद, न त्वत्समोऽन्योऽस्ति कश्चिदस्ति, परं तत् श्रूयतां गोष्ठीशैथिल्यकारणम् । एष मूषकः प्रोन्नतस्थाने धृतमपि भिक्षाशेषञ्च तत्रस्थं भक्षयति । तदभावादेव मठे क्रियापि न भवति । तन्मूषकत्रासार्थमेतेन वंशेन मुहुर्मुहुस्ताड़यामि । नान्यत्कारणमिति । पश्चास्य दुरात्मनो यन्मार्जारमर्कटादयोऽपि अस्योत्पतनेन बृहत्स्फिगाह, अथ ज्ञायते तस्य विलं त्वद्देशे ? ताम्रचूड़ आह, भगवन् ! न वेद्मि सम्यक् । स नूनं निधानस्योपरि तस्य विलम् । निधानोष्मणा प्रकूर्दते उक्तञ्च, ऊष्मापि वित्तजो वृद्धिं तेजो नयति देहिनाम् ।

किं पुनस्तस्य सम्भोगस्त्यागकर्म्मसमन्वितः ॥ ७१ ॥

तथा च, नाकस्मात्शाण्डिलीमाता विक्रीणाति तिलैस्तिलान् ।
लुञ्चितानितरैर्येन कार्य्यमत्र भविष्यति ॥ ७२ ॥

ताम्रचूड आह, कथमेतत् ? स आह,

## कथा २ ।

यदहं कस्मिंश्चित् स्थाने प्रावृट् काले व्रतग्रहणनिमित्तं कञ्चिद्ब्राह्मणं वासार्थं प्रार्थितवान् । ततश्च तद्वचनात्तेनापि शुश्रूषितः सुखेन देवार्च्चनपरस्तिष्ठामि । अथान्यस्मिन्नहनि प्रत्यूषे प्रबुद्धोऽहं ब्राह्मणब्राह्मणीसम्वादे दत्तावधानः शृणोमि । तत्र ब्राह्मण आह, ब्राह्मणि ! प्रभाते दक्षिणायनसङ्क्रान्ति

प्रदानफलदा भविष्यति। तदहं प्रतिग्रहार्थं ग्रामान्तरं यामि। त्वया ब्राह्मणैकस्य भगवतः सूर्यस्योद्देशेन किञ्चिदन्नं दातव्यम्। अथ तच्छ्रुत्वा ब्राह्मणी परुषतरवचनैस्तं भर्त्सयमाना प्राह, कुतस्ते दारिद्र्योपहतस्य भोजनप्राप्तिः? किं न लज्जसे एवं ब्रुवाणः? अपि च न मया तव हस्तलग्नया क्वचिदपि लब्धं सुखं, न मिष्टान्नस्यास्वादनं, न च हस्तपादकण्ठादिभूषणम्। तत् श्रुत्वा भयत्रस्तोऽपि विप्रो मन्दं मन्दं प्राह, ब्राह्मणि! नैतद्युज्यते वक्तुम्। उक्तञ्च,

ग्रासादपि तदर्धञ्च कस्मान्नो दीयतेऽर्थिषु।
इच्छानुरूपो विभवः कदा कस्य भविष्यति॥ ७३॥
ईश्वरा भूरिदानेन यल्लभन्ते फलं किल।
दरिद्रस्तच्च काकिण्या प्राप्नुयादिति नः श्रुतिः॥ ७४॥

दाता लघुरपि सेव्यो भवति न कृपणो महानपि समृद्ध्या।
कूपोऽन्तःस्वादुजलः प्रीत्यै लोकस्य न समुद्रः॥ ७५॥

तथा च, अकृतत्यागमहिम्ना मिथ्या किं राजराजशब्देन।
गोप्तारं न निधीनां कथयन्ति महेश्वरं विबुधाः॥ ७६॥

अपि च, सदा दानैः परिक्षीणः शस्त एव करीश्वरः।
अदानैः पीनगात्रोऽपि निन्द्य एव हि गर्दभः॥ ७७॥
सुशीलोऽपि सुवृत्तोऽपि यात्यदानादधो घटः।
पुनः कुब्जापि काणापि दानादुपरि कर्कटी॥ ७८॥
यच्छज्जलमपि जलदो वल्लभतामेति सकललोकस्य।
नित्यं प्रसारितकरो मित्रोऽपि न वीक्षितुं शक्यः॥७९॥

एवं ज्ञात्वा दारिद्र्याभिभूतैरपि स्वल्पात्स्वल्पतरं काले पात्रे च देयम्। उक्तञ्च,

सत्पात्रं महती श्रद्धा देशकाले यथोचिते।
यद्दीयते विवेकज्ञैस्तदनन्ताय कल्पते॥ ८०॥

तथा च, अतितृष्णा न कर्त्तव्या तृष्णां नैव परित्यजेत्।
अतितृष्णाभिभूतस्य शिखा भवति मस्तके॥ ८१॥

ब्राह्मण्याह, कथमेतत्? स आह,

## कथा ३।

अस्ति कस्मिंश्चिद्वनोद्देशे कश्चित् पुलिन्दः, स च पापर्द्धिं कर्त्तुं वनं प्रति प्रस्थितः। अथ तेन प्रसर्पता महानञ्जनपर्व्वतशिखराकारः क्रोडः समासादितः। तं दृष्ट्वा कर्णान्ताकृष्टनिशितसायकेन समाहतः, तेनापि कोपाविष्टेन चेतसा बालेन्दुद्युतिना दंष्ट्राग्रेण पाटितोदरः पुलिन्दो गतासुर्भूतलेऽपतत्। अथ लुब्धकं व्यापाद्य सूकरोऽपि शरप्रहारवेदनया पञ्चत्वं गतः। एतस्मिन्नन्तरे कश्चिदासन्नमृत्युः शृगाल इतस्ततो निराहारतया पीड़ितः परिभ्रमन् तं प्रदेशमाजगाम। यावद्वराहपुलिन्दौ द्वावपि पश्यति तावत्प्रहृष्टो व्यचिन्तयत्, भोः! सानुकूलो मे विधिः। तेनैतदप्यचिन्तितं भोजनमुपस्थितम्। अथवा साध्विदमुच्यते,

अकृतेऽप्युद्यमे पुंसामन्यजन्मकृतं फलम्।
शुभाशुभं समभ्येति विधिना सन्नियोजितम्॥ ८२॥

तथा च, यस्मिन् देशे च काले च वयसा यादृशेन च।

कृतं शुभाशुभं कर्म्म तत्तथा तेन भुज्यते॥ ८३॥

तदहं तथा भक्षयामि यथा बह्वन्यहानि मे प्राणयात्रा भवति। तत्तावदेवं स्नायुपाशं धनुष्कोटिगतं भक्षयामि।

उक्तञ्च, शनैःशनैश्च भोक्तव्यं स्वयं वित्तमुपार्ज्जितम्।

रसायनमिव प्राज्ञैर्हेलया न कदाचन॥ ८४॥

इत्येवं मनसा निश्चित्य चापघटितकोटिं मुखमध्ये प्रक्षिप्य स्नायुं भक्षितुं प्रवृत्तः। ततश्च त्रुटिते पाशे तालुदेशं विदार्य्य चापकोटिर्म्मस्तकमध्येन निष्क्रान्ता। सोऽपि तद्वेदनया तत्क्षणात् मृतः। अतोऽहं ब्रवीमि,

अतितृष्णा न कर्त्तव्या तृष्णां नैव परित्यजेत्।

अतितृष्णाभिभूतस्य शिखा भवति मस्तके॥ ८५॥

स पुनरप्याह, ब्राह्मणि! न श्रुतं भवत्या।

आयुः कर्म्म च वित्तञ्च विद्यानिधनमेव च।

पञ्चैतानि हि सृज्यन्ते गर्भस्थस्यैव देहिनः॥ ८६॥

अथैवं सा तेन प्रबोधिता ब्राह्मण्याह, यद्येवं तदस्ति मे गृहे स्तोकतिलराशिः। ततस्तिलांश्छित्वा तिलचूर्णेन ब्राह्मणं भोजयिष्यामीति। ततस्तद्वचनं श्रुत्वा ब्राह्मणो ग्रामं गतः। सापि तिलानुष्णोदकेन संमर्द्य कुट्टयित्वा सूर्य्यातपे दत्तवती। अत्रान्तरे तस्या गृहकर्म्मव्यग्रायास्तिलानां मध्ये कश्चित्सारमेयो मूत्रोत्सर्गं चकार। तं दृष्ट्वा सा चिन्तितवती, अहो! नैपुण्यं पश्य पराङ्मुखीभूतस्य विधेर्य्यदेते

तिला अभोज्याः कृताः । तदहमेतान् समादाय कस्यचिद्गृहं गत्वा लुञ्चितैरलुञ्चितानानयामि । सर्व्वोऽपि जनोऽनेन विधिना प्रदास्यतीति । अथ यस्मिन् गृहेऽहं भिक्षार्थं प्रविष्टस्तत्र गृहे सापि तिलानादाय प्रविष्टा विक्रयं कर्त्तुम् । आह च, गृह्णातु कश्चिदलुञ्चितैर्लुञ्चितांस्तिलान् । अथ तद्गृहगृहिणी गृहं प्रविष्टा यावदलुञ्चितैर्लुञ्चितान् गृह्णाति तावदस्याः पुत्रेण कामन्दकिशास्त्रं दृष्ट्वा व्याहृतम्, मातः । अग्राह्याः खल्विमे तिलाः । नास्या अलुञ्चितैर्लुञ्चिता ग्राह्याः । कारणं किञ्चिद्भविष्यति ; तेनैषालुञ्चितैर्लुञ्चितान् प्रयच्छति । तत् श्रुत्वा तया परित्यक्तास्ते तिलाः । अतोऽहं ब्रवीमि ।

नाकस्माच्छाण्डिलीमाता विक्रीणाति तिलैस्तिलान् ।
लुञ्चितानितरैर्येन हेतुरत्र भविष्यति ॥ ८७ ॥

एतदुक्त्वा स भूयोऽपि प्राह, अथ ज्ञायते तस्य क्रमणमार्गः । ताम्रचूड आह, भगवन् ! ज्ञायते यत एकाकी न समागच्छति । किन्त्वसंख्ययूथपरिवृत पश्यतो मे परिभ्रमन्नितस्ततः सर्व्वजनेन सहागच्छति याति च । अभ्यागत आह, अस्ति किञ्चित्खनित्रकम् स आह, बाढमस्ति ; यथा सर्व्वलोहमयी स्वहस्तिका । अभ्यागत आह, तर्हि प्रत्यूषे त्वया मया सह बोद्धव्य येन द्वावपि जनचरणमलिनायां भूमौ तत्पदानुसारेण गच्छाव. । मयापि तद्वचनमाकर्ण्य चिन्तितम् । अहो ! विनष्टोऽस्मि यतोऽस्य साभिप्रायवचांसि

श्रूयन्ते। नूनं यथा निधानं ज्ञातं तथा दुर्गमप्यस्माकं ज्ञास्यति एतदभिप्रायादेव ज्ञायते। उक्तञ्च।

सकृदपि दृष्ट्वा पुरुषं विबुधा जानन्ति सारतां तस्य।
हस्ततुलयापि निपुणाः पलप्रमाणं विजानन्ति॥ ८८॥

वाञ्छैव सूचयति पूर्वतरं भविष्यं
पुंसां यदन्यतनुजं त्वशुभं शुभं वा।
विज्ञायते शिशुरजातकलापचिह्नः
प्रत्युद्गतैरपसरन् सरसः कलापी॥ ८९॥

ततोऽहं भयत्रस्तमनाः सपरिवारो दुर्गमार्गं परित्यज्यान्यमार्गेण गन्तुं प्रवृत्तः। सपरिजनो यावदग्रतो गच्छामि तावत्सम्मुखो बृहत्कायो मार्जारः समायाति। स च मूषकवृन्दमवलोक्य तन्मध्ये सहसोत्पपात। अथ ते मूषका मां कुमार्गगामिनमवलोक्य गर्हयन्तो हतशेषा रुधिरप्लावितवसुन्धरास्तमेव दुर्गं प्रविष्टाः। अथवा साध्विदमुच्यते।

छित्त्वा पाशमपास्य कूटरचनां भङ्क्त्वा बलाद्वागुरां
पर्यन्ताग्निशिखाकलापजटिलान्निर्गत्य दूरं वनात्।
व्याधानां शरगोचरादपि जवेनोत्पत्य धावन्मृगः
कूपान्तः पतितः करोतु विधुरे किम्वा विधौ पौरुषम्॥९०॥

अथाहमेकोऽन्यत्र गतः शेषा मूढतया तत्रैव दुर्गप्रविष्टाः। अत्रान्तरे स दुष्टपरिव्राजको रुधिरविन्दुचर्चितां भूमिमवलोक्य तेनैव दुर्गमार्गेणागत्योपस्थितः। ततश्च खहस्तिकया खनितुमारब्धः। अथ तेन खनता प्राप्तं तन्निधानं यस्योपरि

सदैवाहं क्षतवसतिर्थस्योपणा महादुर्गमपि गच्छामि। ततो हृष्टमनास्ताम्रचूडमिदमूचेऽभ्यागतः। भो भगवन्! इदानीं स्वपिहि निःशङ्कः। अस्योष्मणा मूषकस्ते जागरणं करोति। एवमुक्त्वा भिधानमादाय मठाभिमुखं प्रस्थितौ द्वावपि। अहमपि यावन्निधानमागच्छामि तावद्रमणीय-मुद्वेगकारकं तत् स्थानं वीक्षितुमपि न शक्नोमि। अचिन्तयञ्च। किं करोमि? क्व गच्छामि? कथं मे स्यान्मनसः प्रशान्तिः? एवं चिन्तयतो महाकष्टेन स दिवसो व्यतिक्रान्तः। अथास्तमितेऽर्के सोद्वेगो निरुत्साहस्तस्मिन्मठे सपरिवारः प्रविष्टः। अथास्मत्परिग्रहशब्दमाकर्ण्य ताम्रचूडोऽपि भूयो भिक्षापात्रं जर्जरवंशेन ताडयितुं प्रवृत्तः। अथासावभ्यागतः प्राह। सखे? किमद्यापि निःशङ्को न निद्रां गच्छसि। स आह, भगवन्! भूयोऽपि समायातः सपरिवारः स दुष्टात्मा मूषकः। तद्भयाज्जर्जरवंशेन भिक्षापात्रं ताडयामि। ततो विहस्याभ्यागतः प्राह। सखे! मा भैषीः। वित्तेन सह गतोऽस्य कूर्दनोत्साहः। सर्वेषामपि जन्तूनामियमेव स्थितिः। उक्तञ्च।

यदुत्साही सदा मर्त्यः पराभवति यज्जनान्।
यदुद्धतं वदेद्वाक्यं तत्सर्वं वित्तजं बलम् ॥ ८१ ॥

अथाहं तत् श्रुत्वा कोपाविष्टो भिक्षापात्रमुद्दिश्य विशेषादुत्कूर्दितोऽप्राप्त एव भूमौ निपतितः। तत् श्रुत्वासौ मे शत्रुर्विहस्य ताम्रचूडमुवाच। भोः! पश्य पश्य कौतूहलम्।

आह च, अर्थेन बलवान् सर्व्वो अर्थयुक्तः स पण्डितः ।
पश्यैनं मूषकं व्यर्थं स्वजातेः समतां गतम् ॥ ८२ ॥

तत्त्वमपि हि त्वं गतशङ्कः । यदस्योत्पतनकारणं तदावयोर्हस्तगतं जातम् । अथवा साध्विदमुच्यते।

दंष्ट्राविरहितः सर्पो मदहीनो यथा गजः
तथार्थेन विहीनोऽत्र पुरुषो नामधारकः ॥ ८३॥

तच्छ्रुत्वाहं मनसा विचिन्तितवान् । यतोऽङ्गलिमात्रमपि कूर्दनशक्तिर्नास्ति तद्धिगर्थहीनस्य पुरुषस्य जीवितम् । उक्तञ्च,

अर्थेन च विहीनस्य पुरुषस्याल्पमेधसः ।
उच्छिद्यन्ते क्रियाः सर्व्वा ग्रीष्मे कुसरितो यथा ॥ ८४ ॥
यथा काकयवाः प्रोक्ता यथारण्यभवास्तिलाः ।
नाममात्रा न सिद्धौ हि धनहीनास्तथा नराः ॥ ८५ ॥
सन्तोऽपि न हि राजन्ते दरिद्रस्येतरे गुणाः ।
आदित्य इव भूतानां श्रीर्गुणानां प्रकाशिनी ॥ ८६ ॥
न तथा बाध्यते लोके प्रकृत्या निर्धनो जनः ।
यथा द्रव्याणि सम्प्राप्य तैर्विहीनः सुखे स्थितः ॥ ८७ ॥
शुष्कस्य कीटखातस्य वह्निदग्धस्य सर्व्वतः ।
तरोरप्यूषरस्थस्य वरं जन्म न चार्थिनः ॥ ८८ ॥
शङ्कनीया हि सर्व्वत्र निष्प्रतापा दरिद्रता ।
उपकर्त्तुमपि प्राप्तं निःस्वं संत्यज्य गच्छति ॥ ८९ ॥
उन्नम्योन्नम्य तत्रैव निर्धनानां मनोरथाः ।
हृदयेष्वेव लीयन्ते विधवास्त्रीस्तनाविव ॥ १०० ॥

व्यक्तोऽपि वासरे नित्यं दौर्गत्यतमसावृतः।
अग्रतोऽपि स्थितो यत्नान्न केनापीह दृश्यते॥ १०१॥

एवं विमृश्याहं भग्नोत्साहस्तन्निधानं गण्डोपधानीकृतं दृष्ट्वा स्वं दुर्गं प्रभाते गतः। ततश्च मद्भृत्याः प्रभाते गच्छन्तो मिथो जल्पन्ति। अहो! असमर्थोऽयमुदरपूरणेऽस्माकम्। केवलमस्य पृष्ठलग्नानां बिडालादिविपत्तयः। तत्किमनेनाराधितेन। उक्तञ्च,

यत्सकाशान्न लाभः स्यात्केवलाः स्युर्विपत्तयः।
स स्वामी दूरतस्त्याज्यो विशेषादनुजीविभिः॥ १०२॥

एवं तेषां वचांसि श्रुत्वा स्वदुर्गं प्रविष्टोऽहम्। यावन्न कश्चिन्मम सम्मुखोऽभ्येति तावन्मया चिन्तितम्। धिगियं दरिद्रता। अथवा साध्विदमुच्यते।

मृतो दरिद्रः पुरुषो मृतं मैथुनमप्रजम्।
मृतमश्रोत्रियं श्राद्धं मृतो यज्ञस्त्वदक्षिणः॥ १०३॥

एवं मे चिन्तयतस्ते भृत्या मम शत्रूणां सेवका जाताः। ते च मामेकाकिनं दृष्ट्वा विडम्बनां कुर्व्वन्ति। अथ मयैकाकिना योगनिद्रां गतेन भूयो विचिन्तितम्। यत्तस्य कुतपस्विनः समाश्रयं गत्वा तद्गण्डोपधानवर्त्तिकृतां वित्तपेटां शनैःशनैर्विदार्य्य तस्य निद्रावशं गतस्य स्वदुर्गे तद्वित्तमानयामि येन भूयोऽपि मे वित्तप्रभावेनाधिपत्यं पूर्व्ववद्भवति। उक्तञ्च, व्यथयन्ति परं चेतो मनोरथशतैर्जनाः।

नानुष्ठानैर्धनैर्हीनाः कुलजा विधवा इव॥ १०४॥

दौर्गत्यं देहिनां दुःखमपमानकरं परम्।
येन स्वैरपि मन्यन्ते जीवन्तोऽपि मृता इव ॥१०५॥
दैन्यस्य पात्रतामेति पराभूतेः परं पदम्।
विपदामाश्रयः शश्वद्दौर्गत्यकलुषीकृतः ॥ १०६ ॥
लज्जन्ते बान्धवास्तेन सम्बन्धं गोपयन्ति च।
मित्राण्यमित्रतां यान्ति यस्य न स्युः कपर्दकाः ॥ १०७ ॥
मूर्त्तं लाघवमेवैतदपायानामिदं गृहम्।
पर्यायो मरणस्यायं निर्धनत्वं शरीरिणाम् ॥ १०८ ॥
अजाधूलिरिव त्रस्तैर्मार्जनीरेणुवज्जनैः।
दीपखट्वोत्थच्छायेव त्यज्यते निर्धनो जनैः ॥ १०९ ॥
शौचावशिष्टयाप्यस्ति किञ्चित्कार्य्यं क्वचिन्मृदा।
निर्धनेन जनेनैव न तु किञ्चित्प्रयोजनम् ॥ ११० ॥
अधनो दातुकामोऽपि सम्प्राप्तो धनिनां गृहम्।
मन्यते याचकोऽयं धिग्दारिद्र्यं खलु देहिनाम् ॥ १११ ॥

अतो वित्तापहारं विदधतो यदि मे मृत्युः स्यात्तथापि शोभनम्। उक्तञ्च,

स्ववित्तहरणं दृष्ट्वा यो हि रक्षत्यसून्नरः।
पितरोऽपि न गृह्णन्ति तद्दत्तं सलिलाञ्जलिम् ॥ ११२ ॥

तथा च, गवार्थे ब्राह्मणार्थे च स्त्रीवित्तहरणे तथा।
प्राणांस्त्यजति यो युद्धे तस्य लोकाः सनातनाः ॥ ११३ ॥

एवं निश्चित्य रात्रौ तत्र गत्वा निद्रावशमुपागतस्य पेटायां मया छिद्रं कृतं यावत्तावत्प्रबुद्धो दुष्टतापसः। ततश्च

जर्जरवंशप्रहारेण शिरसि ताडितः कथञ्चिदायुःशेषतया निर्गतोऽहं न मृतश्च । उक्तञ्च,

प्राप्तव्यमर्थं लभते मनुष्यो
देवोऽपि तं लङ्घयितुं न शक्तः ।
तस्मान्न शोचामि न विस्मयो मे
यदस्मदीयं न हि तत्परेषाम् ॥ ११४ ॥

काकमूर्मो पृच्छतः, कथमेतत् ? हिरण्यक आह,

## कथा ४ ।

अस्ति कस्मिंश्चिन्नगरे सागरदत्तो नाम वणिक्; तत्सूनुना रूपकशतेन विक्रीयमाणः पुस्तको गृहीतः । तस्मिंश्च लिखितमस्ति ।

प्राप्तव्यमर्थं लभते मनुष्यो
देवोऽपि तं लङ्घयितुं न शक्तः ।
तस्मान्न शोचामि न विस्मयो मे
यदस्मदीयं न हि तत्परेषाम् ॥ ११५ ॥

तद्दृष्ट्वा सागरदत्तेन तनुजः पृष्टः, पुत्र ! कियता मूल्येनैष पुस्तको गृहीतः ? सोऽब्रवीत्, रूपकशतेन । तच्छ्रुत्वा सागरदत्तोऽब्रवीत्, धिङ्मूर्ख ! त्वं लिखितैकश्लोकं पुस्तकं रूपकशतेन यद्गृहीतवान् तया बुद्ध्या कथं द्रव्योपार्जनं करिष्यसि ? तदद्य प्रभृति त्वया मे गृहे न प्रवेष्टव्यम् । एवं निर्भर्त्स्य गृहान्निःसारितः । स च तेन निर्वेदेन विप्रकृष्टं देशान्तरं गत्वा

किमपि नगरमासाद्यावस्थितः। अथ कतिपयदिवसैस्तन्नगरनिवासिना केनचिदसौ पृष्टः, कुतो भवानागतः ? किं नामधेयो वेति ? असावब्रवीत्, प्राप्तव्यमर्थं लभते मनुष्यः। अथान्येनापि पृष्टेनानेन तथैवोत्तरं दत्तम्। एवं च तस्य नगरस्य मध्ये प्राप्तव्यमर्थ इति तस्य प्रसिद्धं नाम जातम्। अथ राजकन्या चन्द्रवती नामाभिनवरूपयौवनसम्पन्ना सखीद्वितीयैकस्मिन् महोत्सवदिवसे नगरं निरीक्षमाणास्ति। तत्रैव च कश्चिद्राजपुत्रोऽतीव रूपसम्पन्नो मनोरमश्च कथमपि तस्या दृष्टिगोचरे गतः। तद्दर्शनसमकालमेव कुसुमवाणाहतया तया निजसख्यभिहिता, सखि! यथा विलासेन सह समागमो भवति, तथाद्य त्वया यतितव्यम्। एवञ्च श्रुत्वा सा सखी तत्सकाशं गत्वा शीघ्रमब्रवीत्, यदहं चन्द्रवत्या तवान्तिकं प्रेषिता, भणितञ्च त्वां प्रति तया, यन्मम त्वद्दर्शनान्मनोभवेन पश्चिमावस्था कृता। तद्यदि शीघ्रमेव मदन्तिके न समेष्यसि तदा मे मरणं शरणम्। इति श्रुत्वा तेनाभिहितम्, यद्यवश्यं मया तत्रागन्तव्यं तत्कथय केनोपायेन प्रवेष्टव्यम् ? अथ सख्याभिहितम्, रात्रौ सौधावलम्बितया दृढवरत्रया त्वया तत्रारोढव्यम्। सोऽब्रवीत्, यद्येवं निश्चयो भवत्यास्तदहमेवं करिष्यामि। इति निश्चित्य सखी चन्द्रवतीसकाशं गता। अथागतायां रजन्यां स राजपुत्रः स्वचेतसा व्यचिन्तयत्, अहो! महदकृत्यमेतत्। उक्तञ्च,

गुरोः सुतां मित्रभार्यां स्वामिसेवकगेहिनीम्।

यो गच्छति पुमांल्लोके तमाहुर्ब्रह्मघातिनम् ॥ ११६ ॥
अपरञ्च, अयशः प्राप्यते येन येन चापगतिर्भवेत् ।
स्वर्गाच्च भ्रश्यते येन तत्कर्म्म न समाचरेत् ॥ ११७ ॥

इति सम्यग्विचार्य्य तत्सकाशं न जगाम। अथ प्रासव्यमर्थः पर्य्यटन् धवलगृहपार्श्वे रात्रावलम्बितवरत्रां दृष्ट्वा कौतुकाविष्टहृदयस्तामालम्ब्याधिरूढ़ः। तया च राजपुत्र्या स एवायमित्याश्वस्तचित्तया स्नानखादनपानाच्छादनादिना सम्मान्य तेन सह शयनतलमाश्रितया तदङ्गसंस्पर्शसञ्जातहर्षरोमाञ्चितगात्रयोक्तम्, युष्मद्दर्शनमात्रानुरक्तया मयात्मा प्रदत्तोऽयम्। त्वद्वर्जमन्यो भर्त्ता मनस्यपि मे न भविष्यतीति। तत्कस्मान्मया सह न ब्रवीषि। सोऽब्रवीत्, प्राप्तव्यमर्थं लभते मनुष्यः। इत्युक्ते तयान्योऽयमिति मत्वा धवलगृहादुत्तार्य मुक्तः। स तु खण्डदेवकुले गत्वा सुप्तः। अथ तत्र कयाचित्स्वैरिण्या दत्तसङ्केतको यावद्दण्डपाशकः प्राप्तस्तावदसौ पूर्व्वसुप्तस्तेन दृष्टो रहस्यसंरक्षणार्थमभिहितश्च, को भवान्? सोऽब्रवीत्, प्राप्तव्यमर्थं लभते मनुष्यः। इति श्रुत्वा दण्डपाशकेनाभिहितम्, यच्छून्यं देवगृहमिदम्। तदत्र मदीयस्थाने गत्वा स्वपिहि। तथा प्रतिपद्य स मतिविपर्य्यासादन्यशयने सुप्तः। अथ तस्य रक्षकस्य हृद्दकन्या विनयवती नाम रूपयौवनसम्पन्ना कस्यापि पुरुषस्यानुरक्ता सङ्केतं दत्त्वा तत्र शयने सुप्तासीत्। अथ सा तमायातं दृष्ट्वा स एवायमस्मद्वल्लभ इति रात्रौ घनतरान्ध-

कारव्यामोहितोत्थाय भोजनाच्छादनादिक्रियां कारयित्वा गान्धर्वविवाहेनात्मानं विवाहयित्वा तेन समं शयने स्थिता विकसितवदनकमला तमाह, किमद्यापि मया सह विश्रब्धं भवान्न ब्रवीति। सोऽब्रवीत्, प्राप्तव्यमर्थं लभते मनुष्यः। इति श्रुत्वा तया चिन्तितम्, यत्कार्यमसमीचितं क्रियते तस्येदृक्फलविपाको भवतीति। एवं विमृश्य सविषादया तया निःसारितोऽसौ। स च यावद्वीथीमार्गेण गच्छति तावदन्यविषयवासी वरकीर्त्तिर्नाम वरो महता वाद्यशब्देनागच्छति। प्राप्तव्यमर्थोऽपि तैः समं गन्तुमारब्धः। अथ यावत्प्रत्यासन्ने लग्नसमये राजमार्गासन्नश्रेष्ठिगृहद्वारे रचितमण्डपवेदिकायां कृतकौतुकमङ्गलवेषा वणिक्सुतास्ति तावन्मदमत्तो हस्त्यारोहकं हत्वा प्रणश्यज्जनकोलाहलेन लोकमाकुलयंस्तमेवोद्देशं प्राप्तः। तं च दृष्ट्वा सर्वे वरानुयायिनो वरेण सह प्रणश्य दिशो जग्मुः। अथास्मिन्नवसरे भयतरललोचनामेकाकिनीं कन्यामवलोक्य मा भैषीरहं परित्रातेति सुधीरं स्थिरीकृत्य दक्षिणपाणौ संगृह्य महासाहसिकतया प्राप्तव्यमर्थः परुषवाक्यैर्हस्तिनं निर्भर्त्सितवान्। ततः कथमपि दैवयोगादपयाते हस्तिनि यावत्ससुहृद्बान्धवोऽतिक्रान्तलग्नसमये वरकीर्त्तिरागच्छति तावत्तां कन्यामन्यहस्तगतां दृष्ट्वाभिहितम्, भोः श्वशुरक। विरुद्धमिदं त्वयानुष्ठितं, यन्मह्यं प्रदाय कन्यान्यस्मै प्रदत्तेति। सोऽब्रवीत्, भो! अहमपि हस्तिभयपलायितो भवद्भिः सहायातो न जाने

किमिदं वृत्तम् । इत्यभिधाय दुहितरं प्रष्टुमारब्धः, वत्से ! न त्वया सुन्दरं कृतम् । तत्कथ्यतां कोऽयं वृत्तान्तः ? साब्रवीत्, यदहमनेन प्राणसंशयाद्रक्षिता तदेनं मुक्त्वा मम जीवन्त्या नान्यः पाणिं ग्रहीष्यतीति । अनेन वार्त्ताव्यतिकरेण रजनी व्युष्टा । अथ प्रातस्तत्र सञ्जाते महाजनसमवाये वार्त्ताव्यतिकरं श्रुत्वा राजदुहिता तमुद्देशमागता । कर्णपरम्परया श्रुत्वा दण्डपाशकसुतापि तत्रैवागता । अथ तं महाजनसमवायं श्रुत्वा राजापि तत्रैवाजगाम । प्राप्तव्यमर्थं प्राह, भो ! विश्रब्धं कथय, कीदृशोऽसौ वृत्तान्तः, अथ सोऽब्रवीत् ? प्राप्तव्यमर्थं लभते मनुष्य इति । राजकन्या स्मृत्वा प्राह, देवोऽपि तं लङ्घयितुं न शक्तः । ततोदण्डपाशकसुताब्रवीत्, तस्मान्न शोचामि न विस्मयो म इति । तमखिललोकवृत्तान्तमाकर्ण्य वणिक्सुताब्रवीत्, यदस्मदीयं न हि तत्परेषामिति । अभयदानं दत्त्वा राजा पृथक्पृथग्वृत्तान्तान् ज्ञात्वावगततत्त्वस्तस्मै प्राप्तव्यमर्थाय स्वदुहितरं सबहुमानं ग्रामसहस्रेण समं सर्वालंकारपरिवारयुतां दत्त्वा त्वं मे पुत्रोऽसीति नगरविदितं तं यौवराज्येऽभिषिक्तवान् । दण्डपाशकेनापि स्वदुहिता स्वशक्त्या वस्त्रदानादिना सभाव्य प्राप्तव्यमर्थाय प्रदत्ता । अथ प्राप्तव्यमर्थेनापि स्वीयपितृमातरौ समस्तकुटुम्बावृतौ तस्मिन्नगरे सम्मानपुरःसरं समानीतौ । अथ सोऽपि स्वगोत्रेण सह विविधभोगानुपभुञ्जानः सुखेनावस्थितः । अतोऽहं ब्रवीमि,

प्राप्तव्यमर्थं लभते मनुष्यो
देवोऽपि तं लङ्घयितुं न शक्तः ।
तस्मान्न शोचामि न विस्मयो मे
यदस्मदीयं न हि तत्परेषाम् ॥ ११८ ॥

तदेतत्सकलं सुखदुःखमनुभूय परं विषादमुपागतोऽनेन मित्रेण त्वत्सकाशमानीतः । तदेतन्मे वैराग्यकारणम् । मन्थरक आह, भद्र ! भवति सुहृदयमसन्दिग्धं यः क्षुत्क्षामोऽपि शत्रुभूतं त्वां भक्ष्यस्थाने स्थितमेवं पृष्ठमारोप्यानयति न मार्गेऽपि भक्षयति । उक्तञ्च यतः ।

विकारं याति नो चित्तं वित्ते यस्य कदाचन ।
मित्रं स्यात् सर्व्वकाले च कारयेन्मित्रमुत्तमम् ॥ ११९ ॥
विद्वद्भिः सुहृदामत्र चिह्नैरेतैरसंशयम् ।
परीक्षाकरणं प्रोक्तं होमाग्नेरिव पण्डितैः ॥ १२० ॥

तथाच, आपत्काले तु सम्प्राप्ते यन्मित्रं मित्रमेव तत् ।
वृद्धिकाले तु सम्प्राप्ते दुर्जनोऽपि सुहृद्भवेत् ॥ १२१ ॥

तन्ममाप्यद्यास्य विषये विश्वासः समुत्पन्नो यतो नीतिविरुद्धेयं मैत्री मांसाशिभिर्व्वायसैः सह जलचराणाम् । अथवा साध्विदमुच्यते,

मित्रं कोऽपि न कस्यापि नितान्तं न च वैरकृत् ।
दृश्यते मित्रविध्वस्तात् कार्य्याद्वैरी परीक्षितः ॥ १२२ ॥

तत्स्वागतं भवतः ? स्वगृहवदास्यतामत्र सरस्तीरे । यच्च

वित्तनाशो विदेशवासश्च ते सञ्जातस्तत्र विषये सन्तापो न कर्त्तव्यः । उक्तञ्च,

अभ्रच्छाया खलप्रीतिः सिद्धमन्नञ्च योषितः ।
किञ्चित्कालोपभोग्यानि यौवनानि धनानि च ॥१२३॥

अत एव विवेकिनो जितात्मानो धनस्पृहां न कुर्व्वन्ति उक्तञ्च, सुसञ्चितैर्जीवनवत्सुरक्षितै-
निंजेऽपि देहे न वियोजितैः क्वचित् ।
पुंसो यमान्तं व्रजतोऽपि निष्ठुरै-
रेतैर्धनैः पञ्चपदी न दीयते ॥ १२४ ॥

अन्यञ्च, यथामिषं जले मत्स्यैर्भक्ष्यते श्वापदैर्भुवि ।
आकाशे पक्षिभिश्चैव तथा सर्व्वत्र वित्तवान् ॥ १२५ ॥

निर्दोषमपि वित्ताढ्यं दोषैर्योजयते नृपः ।
निर्धनः प्राप्तदोषोऽपि सर्व्वत्र निरुपद्रवः ॥ १२६ ॥

अर्थानामर्जने दुःखमर्जितानां च रक्षणे ।
नाशे दुःखं व्यये दुःखं धिगर्थाः कष्टसंश्रयाः ॥ १२७ ॥

अर्थार्थी यानि कष्टानि मूढोऽयं सहते जनः ।
शतांशेनापि मोक्षार्थी तानि चेन्मोक्षमाप्नुयात् ॥ १२८॥

अपरं, विदेशवासजमपि वैराग्यं त्वया न कार्य्यम् । यतः,

को धीरस्य मनस्विनः स्वविषयः ? को वै विदेशः स्मृतो ?
यं देशं श्रयते तमेव कुरुते बाहुप्रतापार्ज्जितम् ।
यद्दंष्ट्रानखलाङ्गलप्रहरणैः सिंहो वनं गाहते
तस्मिन्नेव हतद्विपेन्द्ररुधिरैस्तृष्णां छिनत्त्यात्मनः ॥ १२९ ॥

अर्थहीनः परे देशे गतोऽपि यः प्रज्ञावान् भवति स कथञ्चिदपि न सीदति । उक्तञ्च,

कोऽतिभारसमर्थानां ? किं दूरं व्यवसायिनाम् ?
को विदेशः सुविद्यानां ? कः परः प्रियवादिनाम् ? ॥१३०॥

तत्प्रज्ञानिधिर्भवान्न प्राकृतपुरुषतुल्यः, अथवा,

उत्साहसम्पन्नमदीर्घसूत्रं क्रियाविधिज्ञं व्यसनेष्वसक्तम् ।
शूरं कृतज्ञं दृढ़सौहृदं च लक्ष्मीः स्वयं मार्गति वासहेतोः ॥१३१॥

अपरं प्राप्तोऽप्यर्थः कर्म्मप्रसरा नश्यति । तदेतावन्ति दिनानि त्वदीयमासीत् । मुहूर्त्तमप्यनात्मीयं भोक्तुं न लभ्यते । स्वयमागतमपि विधिनापह्रियते ।

अर्थस्योपार्ज्जनं कृत्वा नैव भोगं समश्नुते ।
अरण्य महदासाद्य मूढः सोमिलको यथा ॥ १३२ ॥

हिरण्यक आह, कथमेतत् ? स आह,

## कथा ५ ।

अस्ति कस्मिंश्चिदधिष्ठाने सोमिलको नाम कौलिको वसति स्म ; स चानेकविधपट्टरचनारञ्जितानि पार्थिवोचितानि सदैव वस्त्राण्युत्पादयति । परं तस्य चानेकविधपट्टरचना-निपुणस्यापि न भोजनाच्छादनाभ्यधिकं कथमप्यर्थमात्रं सम्पद्यते । अथान्ये तत्र सामान्यकौलिकाः स्थूलवस्त्रसम्पादनविज्ञानिनो महर्द्धिसम्पन्नाः । तानवलोक्य स स्वभार्य्यामाह, प्रिये ! पश्यैतान् स्थूलपट्टकारकान् धनकनकसमृ-

ज्ञान्। तदधारणकं ममैतत्स्थानं। तदन्यतोपार्ज्जनाय गच्छामि। सा प्राह, भोः प्रियतम ! मिथ्या प्रलपितमेतद-दन्यत्र गतानां धनं भवति, स्वस्थाने न भवति। उक्तञ्च,

उत्पतन्ति यदाकाशे निपतन्ति महीतले।
पक्षिणां तदपि प्राप्त्या नादत्तमुपतिष्ठति ॥ १३३ ॥

तथाच, न हि भवति यन्न भाव्यं
भवति च भाव्यं विनापि यत्नेन।
करतलगतमपि नश्यति यस्य
तु भवितव्यता नास्ति ॥ १३४ ॥

यथा धेनुसहस्रेषु वत्सो विन्दति मातरम्।
तथा पुरा कृतं कर्म्म कर्त्तारमनुगच्छति ॥ १३५ ॥
शेते सह शयानेन गच्छन्तमनुगच्छति।
नराणां प्राक्तनं कर्म्म तिष्ठति तु सहात्मना ॥ १३६ ॥
यथा छायातपौ नित्यं सुसम्बद्धौ परस्परम्।
एवं कर्म्म च कर्त्ता च संश्लिष्टावितरेतरम् ॥ १३७ ॥

तस्मात्त्वमेव व्यवसायपरो भव। कौलिक आह, प्रिये ! न सम्यगभिहितं भवत्या, व्यवसायं विना कर्म्म न फलति। उक्तञ्च, यथैकेन न हस्तेन तालिका सम्प्रपद्यते।
तथोद्यमपरित्यक्तं न फलं कर्म्मणः स्मृतम् ॥ १३८ ॥
पश्य कर्म्मवशात्प्राप्तं भोज्यकालेऽपि भोजनम्।
हस्तोद्यमं विना वक्त्रे प्रविशेन्न कथञ्चन ॥ १३९ ॥

तथा च, उद्योगिनं पुरुषसिंहमुपैति लक्ष्मी-

दैवं हि दैवमिति कापुरुषा वदन्ति।
दैवं निहत्य कुरु पौरुषमात्मशक्त्या
यत्ने कृते यदि न सिध्यति कोऽत्र दोषः?॥ १४० ॥

तथा च, उद्यमेन हि सिध्यन्ति कार्याणि न मनोरथैः।
न हि सिंहस्य सुप्तस्य प्रविशन्ति मुखे मृगाः॥ १४१ ॥
उद्यमेन विना राजन्। न सिध्यन्ति मनोरथाः।
कातरा इति जल्पन्ति यद्भाव्यं तद्भविष्यति॥ १४२ ॥
स्वशक्त्या कुर्व्वतः कर्म्म न चेत्सिद्धिं प्रयच्छति।
नोपालभ्यः पुमांस्तत्र दैवान्तरितपौरुषः॥ १४३ ॥

तन्मयावश्यं देशान्तरं गन्तव्यम्। इति निश्चित्य वर्द्धमानपुरं गतः। तत्र च वर्षत्रयं स्थित्वा सुवर्णशतत्रयोपार्जनं कृत्वा भूयः स्वगृहं प्रस्थितः। अथार्द्धपथे गच्छतस्तस्य कदाचिदटव्यां पर्य्यटतो भगवान् रविरस्तमुपागतः। तदसौ व्यालभयात् स्थूलतरवटस्कन्धमारुह्य यावत् प्रसुप्तः, तावन्निशीथे स्वप्ने द्वौ पुरुषौ रौद्राकारौ परस्परं प्रजल्पन्तावशृणोत्। तत्रैक आह, भोः कर्त्तः! त्वं किं सम्यक् न वेत्सि? यदस्य सोमिलकस्य भोजनाच्छादाभ्यधिका समृद्धिर्नास्ति। तत् किं त्वयास्य सुवर्णशतत्रयं प्रदत्तम्। स आह, भोः कर्म्मन्! मयावश्यं दातव्यं व्यवसायिनां तत्र च तस्य परिणतिस्त्वदायत्तेति।

अथ यावदसौ कौलिकः प्रबुद्धः सुवर्णग्रन्थिमवलोकयति, तावद्रिक्तं पश्यति। ततः साश्चर्य्यं चिन्तयामास, अहो! किमे-

तत्? महता कष्टेनोपार्जितं वित्तं हेलया क्वापि गतम्। तदर्थं-श्रमोऽकिञ्चनः कथं स्वपक्षां मित्राणाञ्च मुखं दर्शयिष्यामि। इति निश्चित्य तदेव पत्तनं गतः। तत्र च वर्षमात्रेणापि सुवर्णशतपञ्चकमुपार्ज्य भूयोऽपि स्वस्थानं प्रति प्रस्थितः। यावदर्द्धपथे भूयोऽटवीगतस्य भगवान् भानुरस्तं जगामाथ सुवर्णनाशभयात्क्लान्तोऽपि न विश्राम्यति केवलं त्वरितोत्कण्ठः सत्वरं व्रजति। अत्रान्तरे द्वौ पुरुषौ तादृशौ दृष्टिदेशे समागच्छन्तौ जल्पन्तौ च शृणोति। तत्रैकः प्राह, भोः कर्त्तः! किं त्वयैतस्य सुवर्णशतपञ्चकं प्रदत्तम्। तत् किं न वेत्सि? यद्भोजनाच्छादनाभ्यधिकमस्य किञ्चिन्नास्ति। स आह, भोः कर्म्मन्! मयावश्यं देयं व्यवसायिनाम्। तस्य परिणामस्त्वदायत्तः। तत् किं मामुपालभ्यसि? तच्छ्रुत्वा सोमिलको यावद्ग्रन्थिमवलोकयति, तावत्सुवर्णं नास्ति। ततः परं दुःखमापन्नो व्यचिन्तयत्, अहो! किं मम धनरहितस्य जीवितेन। तदत्र वटवृक्षे आत्मानमुद्बध्य प्राणांस्त्यजामि। एवं निश्चित्य दर्भमयीं रज्जुं विधाय स्वकण्ठे पाशं नियोज्य शाखायामात्मानं निबध्य यावत्प्रक्षिपति तावदेकः पुमाना-काशस्थ एवेदमाह, भो भोः सोमिलक। मैवं साहसं कुरु। अहं ते वित्तापहारको, न ते भोजनाच्छादनाभ्यधिकं वराटिकामपि सहामि। तद्गच्छ स्वगृहं प्रति। अन्यच्च भवदीयसाहसेनाहं तुष्टः। तथा मे न स्याद्व्यर्थं दर्शनम्। तत्प्रार्थ्यतामभीष्टो वरः कश्चित्। सोमिलक आह, यद्येवं

Rx 133824

| STAGE UP | | BEST Undertaking Issued subject to Undertakings Rules and Regulations 7 nP. BUS | | | | | STAGE DOWN | |
|---|---|---|---|---|---|---|---|---|
| 1 | 11 | | | | | | 1 | 11 |
| 2 | 12 | | | | | | 2 | 12 |
| 3 | 13 | | | | | | 3 | 13 |
| 4 | 14 | | | | | | 4 | 14 |
| 5 | 15 | HOURS | | | | | 5 | 15 |
| 6 | 16 | 7 | 8 | 9 | 10 | 11 | 6 | 16 |
| 7 | 17 | 12 | 13 | 14 | 15 | 16 | 7 | 17 |
| 8 | 18 | 17 | 18 | 19 | 20 | 21 | 8 | 18 |
| 9 | 19 | 22 | Ch | Sp | SUN | MON | 9 | 19 |
| 10 | 20 | TUE | WED | THU | FRI | SAT | 10 | 20 |

Ri 969132

BEST

Undertaki-

प्राह, भोः। किं करिष्यसि भोग-
भोजनाच्छादनाभ्यधिका प्राप्ति-

ता वधूरिव केवला।
यिकैरुपभुज्यते ॥ १४४ ॥
भोगा नास्ति तथापि तद्भवतु।
सज्जने वर्जितः सदा।
स्य स्याद्वित्तसञ्चयः ॥ १४५ ॥
च पततः पततो न वा।
दश वर्षाणि पञ्च च ॥ १४६ ॥
सोऽब्रवीत्।

था ६।

क्ष्णविषाणो नाम महावृषभो प्रति-
तिरेकात्परित्यक्तनिजयथः शृङ्गाभ्यां
स्वेच्छया मरकतसदृशानि शष्पाणि
भक्षयन्नरण्यचरो बभूव। अथ तत्रैव वने प्रलोभको नाम शृगालः प्रतिवसति स्म, स कदाचित् स्वभार्यया सह नदीतीरे सुखोपविष्टस्तिष्ठति। अत्रान्तरे स तीक्ष्णविषाणो जलार्थं तदेव पुलिनमवतीर्णः। ततश्च तस्य लम्बमानौ वृषणावालोक्य शृगाल्या शृगालोऽभिहितः, स्वामिन्! पश्यास्य वृषभस्य मांसपिण्डौ लम्बमानौ यथा स्थितौ।

तदेतौ क्षणेन प्रहरेण वा पतिष्यतः। एवं ज्ञात्वा भवता पुरुषयायिना भाव्यम्। शृगाल आह, प्रिये! न ज्ञायते कदाचिदेतयोः पतनं भविष्यति वा न वा। तत्किं वृथात्र मां नियोजयसि। अत्रस्थस्तावज्जलार्थमागतान्मूषकान् भक्षयिष्यामि सम त्वया मार्गोऽयं यतस्तेषाम्। अपरं यदि त्वां मुक्त्वास्य तीक्ष्णविषाणस्य वृषभस्य पृष्ठे गमिष्यामि तदागत्यान्यः कश्चिदेतत् स्थानं समाश्रयिष्यति। नैतद्युज्यते कर्त्तुम्। उक्तञ्च,

यो ध्रुवाणि परित्यज्य अध्रुवाणि निषेवते।
ध्रुवाणि तस्य नश्यन्ति अध्रुवं नष्टमेव च ॥ १४७ ॥

शृगाल्याह, भोः! कापुरुषस्त्वं यत्किञ्चित्प्राप्य तेनापि सन्तोषं करोषि। उक्तञ्च,

सुपूरा स्यात्कुनदिका सुपूरो मूषिकाञ्जलिः।
सुसन्तुष्टः कापुरुषः स्वल्पकेनापि तुष्यति ॥ १४८ ॥

तस्मात्पुरुषेण सदैवोत्साहवता भाव्यम्। उक्तञ्च,

यत्रोत्साहसमारम्भो यत्रालस्यविहीनता।
नयविक्रमसंयोगस्तत्र श्रीरचला ध्रुवम् ॥ १४९ ॥

तद्दैवमिति सञ्चिन्त्य त्यजेन्नोद्योगमात्मनः।
अनुद्योगं विना तैलं तिलानां नोपजायते ॥ १५० ॥

अन्यच्च, यः स्तोकेनापि सन्तोषं कुरुते मन्दधीर्जनः।
तस्य भाग्यविहीनस्य दत्ता श्रीरपि मार्ज्यते ॥ १५१ ॥

यच्च त्वं वदसि—एतौ पतिष्यतो न वेति—तदप्ययुक्तम्।

उक्तञ्च, कृतनिश्चयिनो वन्द्यास्तुङ्गिमानः प्रशस्यते ।
चातकः को वराकोऽयं ? यस्येन्द्रो वारिवाहकः ॥१५२॥
अपरं मूषकमांसस्य निर्विण्णाहम्, एतौ च मांसपिण्डौ पतनप्रायौ दृश्येते, तत्सर्वथा नान्यथा कर्तव्यमिति । अथासौ तदाकर्ण्य मूषकप्राप्तिस्थानं परित्यज्य तीक्ष्णविषाणस्य पृष्ठमन्वगच्छत् । अथवा साध्विदमुच्यते,

तावत्स्यात्सर्वकृत्येषु पुरुषोऽत्र स्वयं प्रभुः ।
स्त्रीवाक्याङ्कुशविक्षुण्णो यावन्नो ध्रियते बलात् ॥ १५३ ॥

अकृत्यं मन्यते कृत्यमगम्यं मन्यते सुगम् ।
अभक्ष्यं मन्यते भक्ष्यं स्त्रीवाक्यप्रेरितो नरः ॥ १५४ ॥

एवं स तस्य पृष्ठतः सभार्यः परिभ्रमंश्चिरकालमनयत् । न च तयोः पतनमभूत् । ततश्च निर्वेदात्पञ्चदशे वर्षे शृगालः स्वभार्यामाह,

शिथिलौ च सुबद्धौ च पततः पततो न वा ।
निरीक्षितौ मया भद्रे ! दश वर्षाणि पञ्च च ॥ १५५ ॥

तयोस्तत्पश्चादपि पातो न भविष्यति । तत्तदेव स्वस्थानं गच्छावः अतोऽहं ब्रवीमि,

शिथिलौ च सुबद्धौ च पततः पततो न वा ।
निरीक्षितौ मया भद्रे ! दश वर्षाणि पञ्च च ॥ १५६ ॥

पुरुष आह, यद्येवं तद्गच्छ भूयोऽपि वर्द्धमानपुरम् । तत्र द्वौ वणिक्पुत्रौ वसतः ; एको गुप्तधनः, द्वितीय उपभुक्तधनः । ततस्तयोः स्वरूपं बुद्ध्वैकस्य वरः प्रार्थनीयः ।

यदि ते धनेन प्रयोजनमभक्षितेन ततस्त्वामपि गुप्तधनं करोमि। अथवा दत्तभोग्येन धनेन ते प्रयोजनं तदुपभुक्तधनं करोमीति। एवमुक्त्वादर्शनं गतः। सोमिलकोऽपि विस्मितमना भूयोऽपि वर्द्धमानपुरं गतः। अथ सन्ध्यासमये श्रान्तः कथमपि तत्पुरं प्राप्तो गुप्तधनगृहं पृच्छन् लक्ष्मान्प्राप्तमितसूर्ये प्रविष्टः। अथासौ भार्यापुत्रसमेतेन गुप्तधनेन निर्भर्त्स्यमानो हठाद्गृहं प्रविश्योपविष्टः। ततश्च भोजनवेलायां तस्यापि भक्तिवर्जितं किञ्चिदशनं दत्तम्। ततश्च भुक्त्वा तत्रैव यावत्सुप्तो निशीथे पश्यति तावत्तावपि द्वौ पुरुषौ परस्परं मन्त्रयतः। तत्रैक आह, भोः कर्त्तः! किं त्वयास्य गुप्तधनस्यान्योऽधिको व्ययो निर्मितो यत्सोमिलकस्यानेन भोजनं दत्तम्। तदयुक्तं त्वया कृतम्। स आह, भोः कर्मन्! न ममात्र दोषः। मया पुरुषस्य लाभप्राप्तिर्दातव्या। तत्परिणतिः पुनस्त्वदायत्तेति। अथासौ यावदुत्तिष्ठति तावत् गुप्तधनो विसूचिकया खिद्यमानो रुजाभिभूतः क्षणं तिष्ठति। ततो द्वितीयेऽह्नि तद्दोषेण कृतोपवासः सञ्जातः। सोमिलकोऽपि प्रभाते तद्गृहान्निष्क्रम्योपभुक्तधनगृहं गतः। तेनापि चाभ्युत्थानादिना सत्कृतो विहितभोजनाच्छादनसम्मानस्तस्यैव गृहे भव्यशय्यामारुह्य सुष्वाप। ततश्च निशीथे यावत्पश्यति तावत्तावेव द्वौ पुरुषौ मिथो मन्त्रयतः। अथ तयोरेक आह, भोः कर्त्तः! अनेन सोमिलकस्योपकारं कुर्वता प्रभूतो व्ययः कृतः, तत्कथय कथ

मस्योद्धारकविधिर्भविष्यति। अनेन सर्व्वमेतद्व्यवहारकगटच्छात्समानीतम्। स आह, भोः कर्म्मन्! मम कृत्यमेतत्। परिणतिस्त्वदायत्तेति। अथ प्रभातसमये राजपुरुषोराजप्रसादजं वित्तमादाय समायात उपभुक्तधनाय समर्पयामास। तद्दृष्ट्वा सोमिलकश्चिन्तयामास, सञ्चयरहितोऽपि वरमेष उपभुक्तधनो नासौ गुप्तधनः। उक्तञ्च,

अग्निहोत्रफला वेदाः शीलवृत्तफलं श्रुतम्।
रतिपुत्रफला दारा दत्तभुक्तफलं धनम्॥ १५७॥

तद्विधाता मां दत्तभुक्तधनं करोतु, न कार्य्यं मे गुप्तधनेन। ततः सोमिलको दत्तभुक्तधनः सञ्जातः। अतोऽहं ब्रवीमि,

अर्थस्योपार्जनं कृत्वा नैव भोगं समश्नुते।
अरण्यं महदासाद्य मूढः सोमिलको यथा॥ १५८॥

तद्भद्र हिरण्यक!, एवं ज्ञात्वा धनविषये सन्तापो न कार्य्यः। अथ विद्यमानमपि धनं भोज्यवन्ध्यतया तदविद्यमानं मन्तव्यम्।

उक्तञ्च, गृहमध्यनिखातेन धनेन धनिनो यदि।
भवामः किं न तेनैव धनेन धनिनो वयम्॥ १५९॥

तथा च, उपार्जितानामर्थानां त्याग एव हि रक्षणम्।
तडागोदरसंस्थानां परीवाह इवाम्भसाम्॥ १६०॥

दातव्यं भोक्तव्यं धनविषये सञ्चयो न कर्त्तव्यः।
पश्येह मधुकरीणां सञ्चितमर्थं हरन्त्यन्ये॥ १६१॥

अन्यच, दानं भोगो नाशस्तिस्रो गतयो भवन्ति वित्तस्य ।
यो न ददाति न भुङ्क्ते तस्य तृतीया गतिर्भवति ॥१६२॥

एवं ज्ञात्वा विवेकिना न स्थित्यर्थं वित्तोपार्जनं कर्त्तव्यं यतो दुःखाय तत् । उक्तञ्च,

धनादिकेषु विद्यन्ते येऽत्र मूर्खाः सुखाशया ।
तप्तग्रीष्मेण सेवन्ते शैत्यार्थं ते हुताशनम् ॥ १६३ ॥

सर्पाः पिबन्ति पवनं न च दुर्बलास्ते
शुष्कैस्तृणैर्वनगजा बलिनो भवन्ति ।
कन्दैः फलैर्मुनिवरा गमयन्ति कालं
सन्तोष एव पुरुषस्य परं निधानम् ॥ १६४ ॥

सन्तोषामृततृप्तानां यत्सुखं शान्तचेतसाम् ।
कुतस्तद्धनलुब्धानामितश्चेतश्च धावताम् ॥ १६५ ॥

पीयूषमिव सन्तोषं पिबतां निर्वृतिः परा ।
दुःखं निरन्तरं पुंसामसन्तोषवतां पुनः ॥ १६६ ॥

निरोधाच्चेतसोऽक्षाणि निरुद्धान्यखिलान्यपि ।
आच्छादिते रवौ मेघैराच्छन्नाः स्युर्गभस्तयः ॥ १६७ ॥

वाञ्छाविच्छेदनं प्राहुः स्वास्थ्यं शान्ता महर्षयः ।
वाञ्छा निवर्त्तते नार्थैः पिपासेवाग्निसेवनैः ॥ १६८ ॥

अनिन्द्यमपि निन्दन्ति स्तुवन्त्यस्तुत्यमुच्चकैः ।
स्वापतेयकृते मर्त्याः किं किं नाम न कुर्वते? ॥ १६९ ॥

धर्मार्थं यस्य वित्तेहा तस्यापि न शुभावहा ।
प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम् ॥ १७० ॥

दानेन तुल्यो निधिरस्ति नान्यो
लोभाच्च नान्योऽस्ति रिपुः पृथिव्याम्।
विभूषणं शीलसमं न चान्यत्
सन्तोषतुल्यं धनमस्ति नान्यत् ॥ १७१ ॥

दारिद्र्यस्य परा भूतिर्यन्मानद्रविणाल्पता।
जरद्गवधनः शर्वस्तथापि परमेश्वरः ॥ १७२ ॥

सकृत् कन्दुकपातेन पतत्यार्यः पतन्नपि।
तथा पतति मूर्खस्तु मृत्पिण्डपतनं यथा ॥ १७३ ॥

एवं ज्ञात्वा भद्र! त्वया सन्तोषः कार्य इति। मन्थरकवचनमाकर्ण्य वायस आह, भद्र! मन्थरको यदेवं वदति तत्त्वया चित्ते कर्त्तव्यम्। अथवा साध्विदमुच्यते,

सुलभाः पुरुषा राजन्! सततं प्रियवादिनः।
अप्रियस्य च पथ्यस्य वक्ता श्रोता च दुर्लभः ॥ १७४॥

अप्रियाण्यपि पथ्यानि ये वदन्ति नृणामिह।
त एव सुहृदः प्रोक्ता अन्ये स्युर्नाम धारकाः ॥ १७५ ॥

अथैवं जल्पतां तेषांचित्राङ्गो नाम हरिणो लुब्धकत्रासितस्तस्मिन्नेव सरसि प्रविष्टः। अथायान्तं ससम्भ्रममवलोक्य लघुपतनको वृक्षमारूढ़ः। हिरण्यको निकटवर्त्तिनं शरस्तम्बं प्रविष्टः। मन्थरकः सलिलाशयमाश्रितः। अथ लघुपतनको मृगं सम्यक्परिज्ञाय मन्थरकमुवाच, एह्येहि सखे मन्थरक! मृगोऽयं तृषार्त्तोऽत्र समायातः सरसि प्रविष्टः। तस्य शब्दोऽयं न मानुषसम्भव इति। तच्छ्रुत्वा मन्थरको देशकालो-

चित्रमाह, भो लघुपतनक ! यथायं मृगो दृश्यते प्रभूतमुच्छ्वासमुद्वहन्नुद्भ्रान्तदृष्ट्या पृष्ठतोऽवलोकयति तन्न दृष्यार्त्त एष नूनं लुब्धकत्रासित'। तज्ज्ञायतामस्य पृष्ठे लुब्धका आगच्छन्ति न वेति। उक्तञ्च,

भयत्रस्तो नर श्वासं प्रभूतं कुरुते मुहु.।
दिशोऽवलोकयत्येव न स्वास्थ्य व्रजति क्वचित् ॥१७६॥

तच्छ्रुत्वा चित्राङ्ग आह, भो मन्थरक। ज्ञातं त्वया सम्यङ् मे त्रासकारणम्। अह लुब्धकशरप्रहारादुद्धारित' कृच्छ्रेणाच समायात.। मम यूथं तैर्लुब्धकैर्व्यापादितं भविष्यति। तच्छ्रणागतस्य मे दर्शय किञ्चिदगम्य स्थानं लुब्धकानाम्। तदाकर्ण्य मन्थरक आह, भो चित्राङ्ग। श्रूयतां नीतिशास्त्रम्।

द्वावुपायाविह प्रोक्तौ विमुक्तौ शत्रुदर्शने।
हस्तयोश्चालनादेको द्वितीय पादवेगज' ॥१७७॥

तद्गम्यतां शीघ्रं सघन वन, यावदद्यापि नागच्छन्ति ते दुरात्मानो लुब्धकाः। अत्रान्तरे लघुपतनकः सत्वरमभ्युपेत्योवाच, भो मन्थरक। गतास्ते लुब्धका' स्वगृहोन्मुखा' प्रचुरमांसपिण्डधारिण। तच्चित्राङ्ग! त्व विश्रब्धो जलाद्बहिर्भव, ततस्ते चत्वारोऽपि मित्रभावमाश्रितास्तस्मिन् सरसि मध्याह्नसमये वृक्षच्छायाधस्तात्सुभाषितगोष्ठीसुखमनुभवन्त' सुखेन काल नयन्ति। अथवा युक्तमेतदुच्यते,

सुभाषितरसास्वादबद्धरोमाञ्चकञ्चुका'।
विनापि सङ्गम स्त्रीणां सुधिय सुखमासते ॥१७८॥

सुभाषितमयैर्द्रव्यैः सङ्ग्रहं न करोति यः

स तु प्रस्तावयज्ञेषु किं प्रदास्यति दक्षिणाम् ? ॥ १७८ ॥

तथाच, सकृदुक्तं न गृह्णाति स्वयं वा न करोति यः ।

यस्य सम्पुटिका नास्ति कुतस्तस्य सुभाषितम् ॥ १८० ॥

अथैकस्मिन्नहनि गोष्ठीसमये चित्राङ्गो नायातः । अथ ते व्याकुलीभूताः परस्परं जल्पितुमारब्धाः । अहो ! किमद्य सुहृन्न समायातः ? किं सिंहादिभिः क्वापिव्यापादितः ? उत लुब्धकैः ? अथवानले प्रपतितो गर्त्तविषमे वा नवतृणलौल्यादिति ? । अथवा साध्विदमुच्यते,

स्वगृहोद्यानगतेऽपि स्निग्धैः पापं विशङ्क्यते मोहात् ।

किमु दृष्टबहुपायप्रतिभयकान्तारमध्यस्थे ? ॥ १८१ ॥

अथ मन्थरको वायसमाह, भो लघुपतनक ! अहं हिरण्यकश्च तावद्द्वावप्यशक्तौ तस्यान्वेषणं कर्त्तुं मन्दगतित्वात् । तद्गत्वा त्वमरण्यं शोधय यदि कुत्रचित्तं जीवन्तं पश्यसीति । तदाकर्ण्य लघुपतनको नातिदूरे यावद्गच्छति तावत्पल्वलतीरे चित्राङ्गः कूटपाशनियन्त्रितस्तिष्ठति । तं दृष्ट्वा शोकव्याकुलितमनास्तमवोचत् । भद्र ! किमिदम् ? चित्राङ्गोऽपि वायसमवलोक्य विशेषेण दुःखितमना बभूव ।

अथवा युक्तमेतत्,

अपि मन्दत्वमापन्नो नष्टो वापीष्टदर्शनात् ।

प्रायेण प्राणिनां भूयो दुःखावेगोऽधिकोभवेत् ॥ १८२ ॥

ततश्च वाक्यावसाने चित्राङ्गो लघुपतनकमाह, भो मित्र !

सञ्जातोऽयं तावन्मम मृत्युः । तद्युक्तं सम्पन्नं यद्भवता सह मे दर्शनं सञ्जातम् । उक्तञ्च ।

प्राणात्यये समुत्पन्ने यदि स्यान्मित्रदर्शनम् ।
तद्द्वाभ्यां सुखदं पश्चाज्जीवतोऽपि मृतस्य च ॥ १८३ ॥

तत्क्षन्तव्यं यन्मया प्रणयात्सुभाषितगोष्ठीष्वभिहितम् । तथा हिरण्यकमन्थरको मम वाक्याद्वाच्यौ ।

अज्ञानाज्ज्ञानतो वापि दुरुक्तं यदुदाहृतम् ।
तत् क्षन्तव्यं युवाभ्यां मे कृत्वा प्रीतिपरं मनः ॥१८४॥

तत् श्रुत्वा लघुपतनक आह, भद्र ! न भेतव्यमस्मद्विधैः मित्रैर्विद्यमानैः, यावदहं द्रुततरं हिरण्यकं गृहीत्वागच्छामि । अपरं ये सत्पुरुषा भवन्ति ते व्यसने न व्याकुलत्वमुपयान्ति । उक्तञ्च,

सम्पदि यस्य न हर्षो विपदि विषादो रणे न भीरुत्वम् ।
तं भुवनत्रयतिलकं जनयति जननी सुतं विरलम् ॥१८५॥

एवमुक्त्वा लघुपतनकश्चित्राङ्गमाश्वास्य यत्र हिरण्यकमन्थरकौ तिष्ठतस्तत्र गत्वा सर्वं चित्राङ्गपाशपतनं कथितवान् । हिरण्यकञ्च चित्राङ्गपाशमोक्षणं प्रति कृतनिश्चयं पृष्ठमारोप्य भूयोऽपि सत्वरं चित्राङ्गसमीपे गतः । सोऽपि मूषकमवलोक्य किञ्चिज्जीविताशया संश्लिष्ट आह,

आपन्नाशाय विबुधैः कर्त्तव्याः सुहृदोऽमलाः ।
न तरत्यापदं कश्चिद्योऽत्र मित्रविवर्जितः ॥ १८६ ॥

हिरण्यक आह, भद्र ! त्वं तावन्नीतिशास्त्रज्ञो दक्ष-

मतिः । तत्कथमत्र कूटपाशे पतितः। स आह, भो ! न कालोऽयं विवादस्य । तत्र यावत् स पापात्मा लुब्धकः समभ्येति तावत् द्रुततरं कर्त्तयेमं मत्पाशमागम् । तदाकर्ण्य विहस्याह, हिरण्यकः। किं मय्यपि समायाते लुब्धकाद्बिभेषि । ततः शास्त्रं प्रति महती मे विरक्तिः सम्पन्ना यद्भवद्विधा अपि नीतिशास्त्रविद एतामवस्थां प्राप्नुवन्ति । तेन त्वां पृच्छामि, स आह, भद्र ! कर्म्मणा बुद्धिरपि हन्यते । उक्तञ्च, कृतान्तपाशबद्धानां दैवोपहतचेतसाम्

बुद्धयः कुब्जगामिन्यो भवन्ति महतामपि ॥ १८७ ॥

विधात्रा रचिता या सा ललाटेऽक्षरमालिका ।

न तां मार्ज्जयितुं शक्ताः स्वबुद्ध्याप्यतिपण्डिता. ॥१८८॥

एवं तयोः प्रवदतोः सुहृद्व्यसनसन्तप्तहृदयो मन्थरकः शनैःशनैस्तं प्रदेशमाजगाम । तं दृष्ट्वा लघुपतनको हिरण्यकमाह, अहो ! न शोभनमापतितम् । हिरण्यक आह, किं स लुब्धकः समायाति । स आह, आस्तां तावल्लुब्धकवार्त्ता । एष मन्थरकः समागच्छति । तदनीतिरनुष्ठितानेन यतो वयमप्यस्य कारणाद्नूनं व्यापादनं यास्यामो यदि स पापात्मा लुब्धकः समागमिष्यति, तदहं तावत्खमुत्पतिष्यामि। त्वं पुनर्बिलं प्रविश्यात्मानं रक्षयिष्यसि । चित्राङ्गोऽपि वेगेन दिगन्तरं यास्यति । एष पुनर्जलचरः स्थले कथं भविष्यतीति व्याकुलोऽस्मि । अत्रान्तरे प्राप्तोऽयं मन्थरकः । हिरण्यक आह, भद्र ! न युक्तमनुष्ठितं भवता, यदत्र समा

भ्रातः, तद्भूयोऽपि द्रुततरं गम्यतां, यावदसौ लुब्धको न समायाति । मन्थरक आह, भद्र ! किं करोमि ? न शक्नोमि तवास्यो मित्रव्यसनाग्निदाहं सोढुम् । तेनाहमत्रागतः । अथवा साध्विदमुच्यते,

दयितजनविप्रयोगो वित्तवियोगश्च केन सह्याः स्युः ।
यदि सुमहौषधकल्पो वयस्यजनसङ्गमो न स्यात् ॥१८९॥

वरं प्राणपरित्यागो न वियोगो भवादृशैः ।
प्राणा जन्मान्तरे भूयो न भवन्ति भवद्विधाः ॥ १९० ॥

एवं तस्य प्रवदत आकर्णपूरितशरासनो लुब्धकोऽप्युपागतः, तं दृष्ट्वा मूषकेण तस्य स्नायुपाशस्तत्क्षणात् खण्डितः । अत्रान्तरे चित्राङ्गः सत्वरं पृष्ठमवलोकयन् प्रधावितः । लघुपतनको वृक्षमारूढः । हिरण्यकश्च समीपवर्त्ति बिलं प्रविष्टः, अथासौ लुब्धको मृगगमनाद्विषण्णवदनो व्यर्थश्रमस्तं मन्थरकं मन्दं मन्दं स्थलमध्ये गच्छन्तं दृष्टवान्, अचिन्तयच्च । यद्यपि कुरङ्गो धात्रापहृतस्तथाप्ययं कूर्म आहारार्थं सम्पादितः । तदद्यास्यामिषेण मे कुटुम्बस्याहार निर्वृत्तिर्भविष्यति । एवं विचिन्त्य तं दर्भैः सञ्छाद्य धनुषि समारोप्य स्कन्धे कृत्वा गृहं प्रति प्रस्थितः, अत्रान्तरे तं नीयमानमवलोक्य हिरण्यको दुःखाकुलः पर्य्यदेवयत् । कष्टं भोः ! कष्टमापतितम् ।

एकस्य दुःखस्य न यावदन्तं
गच्छाम्यहं पारमिवार्णवस्य ।

तावद्द्वितीयं समुपस्थितं मे
छिद्रेष्वनर्था बहुलीभवन्ति ॥ १८१ ॥
यावदस्खलितं तावत् सुखं याति समे पथि।
स्खलिते च समुत्पन्ने विषमञ्च पदे पदे ॥ १८२ ॥
यन्नम्रं सरलञ्चापि तच्चापत्सु न सीदति ।
धनुर्मित्रं कलत्रं च दुर्लभं शुद्धवंशजम् ॥ १८३ ॥
न मातरि न दारेषु न सोदर्ये न चात्मजे।
विश्रम्भस्तादृशः पुंसां यादृग्मित्रे निरन्तरे ॥ १८४ ॥

यदि तावत् कृतान्तेन मे धननाशो विहितस्तन्मार्गश्रान्तस्य मे विश्रामभूतं मित्रं कस्मादपहृतम्? अपरमपि मित्रं परं मन्थरकसमं न स्यात्। उक्तञ्च,

असम्पत्तौ परो लाभो गुह्यस्य कथनं तथा।
आपद्विमोक्षणं चैव मित्रस्यैतत् फलत्रयम् ॥ १८५ ॥

तदस्य पश्चान्नान्यः सुहृन्मे। तत् किं ममोपर्य्यनवरतं व्यसनशरैर्वर्षति हन्त विधिः? यत आदौ तावद्वित्तनाशस्ततः परिवारभ्रंशस्ततो देशत्यागस्ततो मित्रवियोग इति। अथ वा स्वरूपमेतत्सर्वेषामेव जन्तूनां जीवितधर्मस्य,उक्तञ्च,

कायः सन्निहितापायः सम्पदः क्षणभङ्गुराः।
समागमाः सापगमाः सर्वेषामेव देहिनाम् ॥ १८६ ॥

तथाच, क्षते प्रहारा निपतन्त्यभीक्ष्णं
धनक्षये दीप्यति जाठराग्निः।
आपत्सु वैराणि समुल्लसन्ति

च्छिद्रेष्वनर्था बहुलीभवन्ति ॥ १९७ ॥

अहो ! साधूक्तं केनापि ।

प्राप्ते भये परित्राणं प्रीतिविश्रम्भभाजनम् ।
केन रत्नमिदं सृष्टं मित्रमित्यक्षरद्वयम् ॥ १९८ ॥

अत्रान्तरे चाक्रन्दपरौ चित्राङ्गलघुपतनकौ तत्रैव समायातौ । अथ हिरण्यक आह, अहो ! किं वृथा प्रलपितेन ? तद्यावदेष मन्थरको दृष्टिगोचरान्न नीयते तावदस्य मोक्षोपायश्चिन्त्यतामिति । उक्तञ्च,

व्यसनं प्राप्य यो मोहात्केवलं परिदेवयेत् ।
क्रन्दनं वर्धयत्येव तस्यान्तं नाधिगच्छति ॥ १९९ ॥

केवलं व्यसनस्योक्तं भेषजं नयपण्डितैः ।
तस्योच्छेदसमारम्भो विषादपरिवर्जनम् ॥ २०० ॥

अन्यच्च, अतीतलाभस्य सुरक्षणार्थं
भविष्यलाभस्य च सङ्गमार्थम् ।
आपत्प्रपन्नस्य च मोक्षणार्थं
यन्मन्त्र्यतेऽसौ परमो हि मन्त्रः ॥ २०१ ॥

तच्छ्रुत्वा वायस आह, भो ! यद्येवं तत्क्रियतां मद्वचः । एष चित्राङ्गोऽस्य मार्गे गत्वा किञ्चित्पल्वलमासाद्य तस्य तीरे निश्चेतनो भूत्वा पततु । अहमप्यस्य शिरसि समारुह्य मन्देश्चुप्रहारैः शिर उल्लेखिष्यामि ; येनासौ दुष्टलुब्धकोऽस्य मृतं मत्वा मम चञ्चुप्रहरणप्रत्ययेन मन्थरकं भूमौ क्षिप्त्वा मृगार्थं परिधाविष्यति । अत्रान्तरे त्वया

दर्भमयानि पाशानि खण्डनीयानि। येनासौ मन्थरको द्रुततरं पल्वलं प्रविशति। चित्राङ्ग आह, भो! भद्रोऽयं त्वया दृष्टो मन्त्रः नूनं मन्थरकोऽयं मुक्तो मन्तव्य इति। उक्तञ्च,

सिद्धं वा यदि वा सिद्धं चित्तोत्साहो निवेदयेत्।
प्रथमं सर्व्वजन्तूनां तत् प्राज्ञो वेत्ति नेतरः ॥ २०२ ॥

तदेवं क्रियतामिति। तथानुष्ठिते स लुब्धकस्तथैव मार्गासन्नपल्वलतीरस्थं चित्राङ्गं वायससनाथमपश्यत्। तं दृष्ट्वा हर्षितमना व्यचिन्तयत्। नूनं पाशबन्धनवेदनया वराकोऽयं मृगः सावशेषजीवितः पाशं त्रोटयित्वा कथमप्येतद्वनान्तरं यावत् प्रविष्टस्तावन्मृतः तद्वश्योऽयं मे कच्छपः सुयन्त्रितत्वात्। तदेनमपि तावद्गृह्णामीति। इत्यवधार्य्य कच्छपं भूतले प्रक्षिप्य मृगमुपाद्रवत्। एतस्मिन्नन्तरे हिरण्यकेन वज्रोपमदंष्ट्राप्रहरणेन तद्दर्भवेष्टनं खण्डशः कृतम्। मन्थरकोऽपि तृणमध्यान्निष्क्रम्य समीपवर्त्तिनं पल्वलं प्रविष्टः। चित्राङ्गोऽप्यप्राप्तस्यापि तस्य तत उत्थाय वायसेन सह पलायितः। एतस्मिन्नन्तरे विलक्षो विषादपरो लुब्धको निवृत्तो यावत् पश्यति, तावत् कच्छपोऽपि गतः। ततश्च तत्रोपविश्येमं श्लोकमपठत्।

प्राप्तो बन्धनमप्ययं गुरुमृगस्तावत् त्वया मे हृतः
सम्प्राप्तः कमठः स चापि नियतं नष्टस्तवादेशतः।
क्षुत्क्षामोऽत्र वने भ्रमामि शिशुकैस्त्यक्तः समं भार्य्यया।
यच्चान्यन्न कृतं कृतान्त! कुरु ते तच्चापि सह्या वयम् ॥२०३॥

एवं बहुविधं विलप्य स्वगृहं गतः । अथ तस्मिन् व्याधे दूरतरं गते सर्व्वेऽपि ते काककूर्म्ममृगमूषकाः परमानन्दभाजः परस्परमालिङ्ग्य पुनर्जातमिवात्मानं मन्यमानास्तदेव सरः सम्प्राप्य महासुखेन सुभाषितकथागोष्ठीविनोदेन कालं नयन्ति स्म । एवं ज्ञात्वा विवेकिना मित्रसंग्रहः कार्य्यः । न च मित्रेण सह व्याजेन वर्त्तितव्यमिति । उक्तञ्च यतः,

यो मित्राणि करोत्यत्र न कौटिल्येन वर्त्तते ।
तैः समं न पराभूतिं सम्प्राप्नोति कथञ्चन ॥ २०४ ॥

इति श्रीविष्णुशर्म्मविरचिते पञ्चतन्त्रके मित्रसम्प्राप्ति नाम द्वितीयं तन्त्रं समाप्तम् ।



अथेदमारभ्यते काकोलूकीयं नाम तृतीयं तन्त्रम्। तस्यायमाद्यः श्लोकः।

न विश्वसेत् पूर्व विरोधितस्य शत्रोश्च मित्रत्वमुपागतस्य।
दग्धां गुहां पश्य उलूकपूर्णां काकप्रणीतेन हुताशनेन ॥ १ ॥

तद्यथानुश्रूयते। अस्ति दाचिणात्ये जनपदे, मिहिलारोप्यं नाम नगरम्। तस्य समीपस्थोऽनेकशाखासनाथोऽतिघनतरपत्रच्छन्नो न्यग्रोधपादपोऽस्ति। तत्र च मेघवर्णो नाम वायसराजोऽनेककाकपरिवारः प्रतिवसति स्म। स तत्र विहितदुर्गरचनः सपरिजनः कालं नयति स्म। तथान्योऽरिमर्दनो नामोलूकराजोऽसङ्ख्योलूकपरिवारो गिरिगुहादुर्गाश्रयः प्रतिवसति स्म। स च रात्रावभ्येत्य सदैव तस्य न्यग्रोधस्य समन्तात् परिभ्रमति। अथोलूकराजः पूर्वविरोधवशाद् यं कञ्चिद्वायसं समासादयति तं व्यापाद्य गच्छति। एवं नित्याभिगमनाच्छनैःशनैस्तन्न्यग्रोधपादपदुर्गं तेन समन्तान्निर्वायसं कृतं अथवा भवत्येवम्। उक्तञ्च यतः,

य उपेक्षेत शत्रुं स्वं प्रसरन्तं यदृच्छया।
रोगं चालस्यसंयुतः स शनैस्तेन हन्यते ॥ २ ॥

तथा च, जातमात्रं न यः शत्रुं व्याधिञ्च प्रशमं नयेत्।
अतिपुष्टाङ्गयुक्तोऽपि स पश्चात् तेन हन्यते ॥ ३ ॥

अथान्येद्युः स वायसराजो सर्वान् वायससचिवानाहूय प्रोवाच। भो ! उत्कटस्तावदस्माकं शत्रुरुद्यमसम्पन्नश्च काल-

वशान्नित्यमेव निशागमे समेत्यास्मत्पचकदनं करोति ; तत् कथमस्य प्रतिविधानं ? वयं तावद्रात्रौ न पश्यामः । न च तस्य दिवादुर्गं विजानीमः ; येन गत्वा प्रहरामः । तदत्र विषये किं युज्यते, सन्धिविग्रहयानासनसंश्रयद्वैधीभावानेकतमस्य क्रियमाणस्य । तद्विचार्य्य शीघ्रं कथयन्तु भवन्तः । अथ ते प्रोचुः । युक्तमभिहितं देवेन यदेष प्रश्नः कृतः ।

उक्तञ्च, अपृष्टेनापि वक्तव्यं सचिवेनात्र किञ्चन ।

पृष्टेन तु ऋतं पथ्यं वाच्यञ्च प्रियमप्रियम् ॥ ४ ॥

यो न पृष्टो हितं ब्रूते परिणामे सुखावहम् ।

सुमन्त्री प्रियवक्ता च केवलं स रिपुः स्मृतः ॥ ५ ॥

तस्मादेकान्तमासाद्य कार्य्यो मन्त्रो महीपतेः ।

येन तस्य वयं कुर्म्मो निर्णयं कारणं तथा ॥ ६ ॥

अथ स मेघवर्णोऽन्वयागतानुज्जीविसञ्जीव्यनुजीविप्रजीविचिरजीविनाम्नः पञ्च सचिवान् प्रत्येकं प्रष्टुमारब्धः । तदेतेषामादौ तावदुज्जीविनं पृष्टवान् । भद्र ! एवं स्थिते किं मन्यते भवान् । स आह, राजन् ! बलवता सह विग्रहो न कार्य्यः । यथा स बलवान् कालप्रहर्त्ता च । उक्तञ्च यतः,

बलीयसे प्रणमतां काले प्रहरतामपि ।

सम्पदो नापगच्छन्ति प्रतीपमिव निम्नगाः ॥ ७ ॥

तथा च, सत्वाज्यो धार्म्मिकश्चार्य्यो भ्रातृसङ्घातवान् बली ।

अनेकविजयी चैव सन्धेयः स रिपुर्भवेत् ॥ ८ ॥

सन्धिः कार्य्योऽप्यनार्य्येण विज्ञाय प्राणसंशयम् ।

प्राणैः संरचितैः सर्व्वं यतो भवति रचितम् ॥ ८ ॥

येनानेकयुद्धविजयी स तेन विशेषात् सन्धनीयः। उक्तञ्च,

अनेकयुद्धविजयी सन्धानं यस्य गच्छति।
तत्प्रभावेन तस्याशु वशं गच्छन्त्यरातयः ॥ १० ॥
सन्धिमिच्छेत् समेनापि सन्दिग्धो विजयो युधि।
न हि सांशयिकं कुर्यादित्युवाच बृहस्पतिः ॥ ११ ॥
सन्दिग्धो विजयो युद्धे जनानामिह युध्यताम्।
उपायत्रितयादूर्ध्वं तस्माद्युद्धं समाचरेत् ॥ १२ ॥
असन्दधानो मानाद् यः समेनापि हतो भ्रशम्।
आमकुम्भ इवान्येन करोत्युभयसंचयम् ॥ १३ ॥
समं शक्तिमता युद्धमशक्तस्य हि मृत्यवे।
दृषत् कुम्भौ यथा भित्त्वा तावत् तिष्ठति शक्तिमान् ॥१४॥

अन्यच्च, भूमिर्मित्रं हिरण्यं वा विग्रहस्य फलत्रयम्।
नास्त्येकमपि यद्येषां विग्रहं न समाचरेत् ॥ १५ ॥
खनन्नाखुविलं सिंहः पाषाणशकलाकुलम्।
प्राप्नोति नखभङ्गं वा फलं वा मूषको भवेत् ॥ १६ ॥
तस्मान्न स्यात् फलं यत्र पुष्टं युद्धन्तु केवलम्।
न तत् स्वयं समुत्पाद्यं कर्त्तव्यं न कथञ्चन ॥ १७ ॥
बलीयसा समाक्रान्तो वैतसीं वृत्तिमाचरेत्।
वाञ्छन्नभ्रंशिनीं लक्ष्मीं न भौजङ्गीं कदाचन ॥ १८ ॥
कुर्व्वन् हि वैतसीं वृत्तिं प्राप्नोति महतीं श्रियम्।
भुजङ्गवृत्तिमापन्नो बधमर्हति केवलम् ॥ १९ ॥

कौर्मं सङ्कोचमास्थाय प्रहारानपि मर्षयेत्।
काले काले च मतिमानुत्तिष्ठेत् कृष्णसर्पवत्॥ २०॥
आगतं विग्रहं मत्वा सुसाम्ना प्रशमं नयेत्।
विजयस्य ह्यनित्यत्वाद्रभसात्र समुत्पतेत्॥ २१॥

तथा च, बलिना सह योद्धव्यमिति नास्ति निदर्शनम्।
प्रतिवातं न हि घनः कदाचिदुपसर्पति॥ २२॥

एवमुज्जीवी साममन्त्रं सन्धिकारं कृतवान्। अथ तत् श्रुत्वा सञ्जीविनमाह। भद्र! तवाभिप्रायमपि श्रोतुमिच्छामि। स आह, देव। न ममैतत् प्रतिभाति यच्छत्रुणा सह सन्धिः क्रियते उक्तञ्च यतः,

शत्रुणा न हि सन्दध्यात् सुश्लिष्टेनापि सन्धिना।
सुतप्तमपि पानीयं शमयत्येव पावकम्॥ २३॥

अपरं च स क्रूरोऽत्यन्तलुब्धो धर्म्मरहितः। तत् त्वया विशेषान्न सन्धेयः। उक्तञ्च यतः,

सत्यधर्म्मविहीनेन न सन्दध्यात् कथञ्चन।
सुसन्धितोऽप्यसाधुत्वादचिराद्याति विक्रियाम्॥ २४॥

तस्मात् तेन सह योद्धव्यमिति मे मतिः। उक्तञ्च यतः,

क्रूरो लुब्धोऽलसोऽसत्यः प्रमादी भीरुरस्थिरः।
मूढो युद्धावमन्ता च सुखोच्छेद्यो भवेद्रिपुः॥ २५॥

अपरं तेन पराभूता वयम्। तद्यदि सन्धानकीर्त्तनं करिष्यामः स भूयो ऽत्यन्तं कोपं करिष्यति। उक्तञ्च,

चतुर्थोपायसाध्ये तु रिपौ सान्त्वमपक्रिया।

खिद्यमानमज्वरं प्राज्ञः कोऽम्भसा परिषिञ्चति ? ॥ २६ ॥
सामवादाः सकोपस्य शत्रोः प्रत्युत दीपकाः ।
प्रतप्तस्येव सहसा सर्पिषस्तोयबिन्दवः ॥ २७ ॥
यदेवैतद्वदति रिपुर्बलवान्। तदप्यकारणम्। उक्तञ्च यतः,
सोत्साहशक्तिसम्पन्नो हन्याच्छत्रुं लघुर्गुरुम् ।
यथा कण्ठीरवो नागं सुसाम्राज्यं प्रपद्यते ॥ २८ ॥
मायया शत्रवो बध्या अवध्याः स्युर्बलेन ये ।
यथा स्त्रीरूपमास्थाय हतो भीमेन कीचकः ॥ २९ ॥
तथाच, मृत्योरिवोग्रदण्डस्य राज्ञो यान्ति वशं द्विषः ।
सर्पतुल्यं हि मन्यन्ते दयालुं रिपवो नृपम् ॥ ३० ॥
न याति शमनं यस्य तेजस्तेजस्विते जसा ।
वृथाजातेन किं तेन मातुर्यौवनहारिणा ? ॥ ३१ ॥
या लक्ष्मीर्नानुलिप्ताङ्गी वैरिशोणितकुङ्कुमैः ।
कान्तापि मनसः प्रीतिं न सा धत्ते मनस्विनाम् । ३२ ॥
रिपुरक्तेन संसिक्ता रिपुस्त्रीनेत्राम्बुभिस्तथा ।
न भूमिर्यस्य भूपस्य का श्लाघा तस्य जीवने ॥ ३३ ॥
एवं रक्ताक्षो विग्रहमस्य विज्ञापयामास । अथ तच्छ्रुत्वानुजीविनं प्रदृच्छत् । भद्र ! त्वमपि स्वाभिप्रायं निवेदय। सोऽब्रवीत् । देव ! दुष्टः स बलाधिको निर्मर्यादश्च तत् तेन सह सन्धिविग्रहौ न युक्तौ केवलं यानमर्हं स्यात् । उक्तञ्च, बलोत्कटेन दुष्टेन मर्यादारहितेन च ।
न सन्धिविग्रहौ नैव विना यानं प्रशस्यते ॥ ३४ ॥

द्विधाकारं भवेद्यानं भयत्रस्तप्रहरणम् ।
एकमन्यज्जिगीषोश्च यात्रा लक्षणमुच्यते ॥ ३५ ॥
कार्त्तिके वाथ चैत्रे वा विजिगीषोः प्रशस्यते ।
यानमुत्कृष्टवीर्यस्य शत्रुदेशे न चान्यदा ॥ ३६ ॥
अवस्कन्दप्रदानस्य सर्वे कालाः प्रकीर्त्तिताः ।
व्यसने वर्त्तमानस्य शत्रोश्छिद्रान्वितस्य च ॥ ३७ ॥
स्वस्थानं सुदृढं कृत्वा शूरैश्चाप्तैर्महाबलैः ।
परदेशं ततो गच्छेत् प्रणिधिव्याप्तमग्रतः ॥ ३८ ॥
अज्ञातवीवधासारतोयशस्यो व्रजेत् तु यः ।
परराष्ट्रं स नो भूयः स्वराष्ट्रमधिगच्छति ॥ ३९ ॥

तत् ते युक्तं कर्त्तुमपसरणम् ।

अन्यच्च, न विग्रहं न सन्धानं बलिना तेन पापिना ।
कार्यलाभमपेक्ष्यापसरणं क्रियते बुधैः ॥ ४० ॥

उक्तञ्च यतः, यदपसरति मेषः कारणं तत् प्रहर्त्तुम्
मृगपतिरपि कोपात् सङ्कुचत्युत्पतिष्णुः ।
हृदयविहितवैरा गूढमन्त्रोपचाराः
किमपि विगणयन्तो बुद्धिमन्तः सहन्ते ॥४१ ॥

अन्यच्च, बलवन्तं रिपुं दृष्ट्वा देशत्यागं करोति यः ।
युधिष्ठिर इवाप्नोति पुनर्जीवन् स मेदिनीम् ॥ ४२ ॥
युध्यतेऽहङ्कृतिं कृत्वा दुर्बलो यो बलीयसा ।
स तस्य वाञ्छितं कुर्यादात्मनश्च कुलक्षयम् ॥ ४३ ॥

तद्बलवताभियुक्तस्यापसरणसमयोऽयं न सन्धेर्विग्रहस्य च ;

एवमनुजीविमन्त्रोऽपसरणस्य । अथ तस्य वाक्यं समाकर्ण्य प्रजीविनमाह । भद्र ! त्वमप्यात्मनोऽभिप्रायं वद । सोऽब्रवीत् । देव ! मम सन्धिविग्रहयानानि त्रीण्यपि न प्रतिभाति । विशेषतश्चासनं प्रतिभाति । उक्तञ्च यतः,

नक्रः स्वस्थानमासाद्य गजेन्द्रमपि कर्षति ।
स एव प्रच्युतः स्थानाच्छुनापि परिभूयते ॥४४ ॥

अन्यच्च, अभियुक्तो बलवता दुर्गे तिष्ठेत् प्रयत्नवान् ।
तत्रस्थः सुहृदाह्वानं प्रकुर्वीतात्ममुक्तये ॥ ४५ ॥

यो रिपोरागमं श्रुत्वा भयसन्त्रस्तमानसः ।
स्वस्थानं सन्त्यजेत् तत्र न स भूयो वसेन्नरः ॥ ४६ ॥

दंष्ट्राविरहितः सर्पो मदहीनो यथा गजः ।
स्थानहीनस्तथा राजा गम्यः स्यात् सर्व्वजन्तुषु ॥४७॥

निजस्थानस्थितोऽप्येकः शतं योद्धुं सहेन्नरः ।
शक्तानामपि शत्रूणां तस्मात् स्थानं न सन्त्यजेत् ॥ ४८ ॥

तस्माद्दुर्गं दृढं कृत्वा सुभटासारसंयुतम् ।
प्राकारपरिखायुक्तं शस्त्रादिभिरलङ्कृतम् ॥ ४९ ॥

तिष्ठ मध्यगतो नित्यं युद्धाय कृतनिश्चयः ।
जीवन् सम्प्राप्स्यसि क्ष्मान्तं मृतो वा स्वर्गमेष्यसि ॥ ५० ॥

अन्यच्च, बलिनापि न बध्यन्ते लघवोऽप्येकसंश्रयाः ।
विपक्षेणापि मरुता यथैकस्थानवीरुधः ॥ ५१ ॥

महानप्येकजो वृक्षः बलवान् सुप्रतिष्ठितः
प्रसह्य इव वातेन शक्यो धर्षयितुं यतः ॥ ५२ ॥

अथ ये संहता वृक्षाः सर्व्वतः सुप्रति
न ते शीघ्रेण वातेन हन्यन्ते ह्येकसं
एवं मनुष्यमेकन्तु शौर्य्येणापि समन्वि
शक्यं द्विषन्तो मन्यन्ते हिंसन्ति च
एवं प्रजीवितमन्त्र इदमासनसंश्रयम्
चिरजीविनं प्राह, भद्र! त्वमपि स्वाभि
वीत् देव! षाड्गुण्यमध्ये मम संश्रयः सम्म

तस्यानुष्ठानं कार्य्यम्। उक्तञ्च,

असहायः समर्थोऽपि तेजस्वी किं करिष्यति?।
निर्व्वाते ज्वलितो वह्निः स्वयमेव प्रशाम्यति॥ ५५॥

सङ्गतिः श्रेयसी पुंसां स्वपक्षे च विशेषतः।
तुषैरपि परिभ्रष्टा न प्ररोहन्ति तण्डुलाः॥ ५६॥

तदत्रैव स्थितेन त्वया कश्चित् समर्थः समाश्रयणीयः। यो विपत्प्रतीकारं करोति। यदि पुनस्त्वं स्वस्थानं त्यक्त्वान्यत यास्यसि। तत् कोऽपि ते वाङ्मात्रेणापि सहायत्वं न करिष्यति। उक्तञ्च यतः,

वनानि दहतो वह्नेः सखा भवति मारुतः।
स एव दीपनाशाय कृशे कस्यास्ति सौहृदम्?॥ ५७॥

अथवा नैतदेकान्तं यद्बलिनमेकं समाश्रयेत्। लघूनामपि संश्रयो रक्षायैव भवति। उक्तञ्च यतः,

सङ्घातवान् यथा वेणुर्निविडो वेणुभिर्वृतः।
न शक्यः स समुच्छेत्तुं दुर्बलोऽपि तथा नृपः॥ ५८॥

यदि पुनरुत्तमसंश्रयी भवति तत्किमुच्यते ? उक्तञ्च,

महाजनस्य सम्पर्कः कस्य नोन्नतिकारकः ?

पद्मपत्रस्थितं तोयं धत्ते मुक्ताफलश्रियम् ॥ ५८ ॥

तदेव संश्रयं विना न कश्चित्प्रतीकारो भवति । तस्मात्संश्रयः कार्य्यः इति मेऽभिप्रायः । एवं चिरञ्जीविमतम् । मय्येवमभिहिते स मेघवर्णो राजा चिरन्तनं पितृसचिवं दीर्घायुषं सकलनीतिशास्त्रपारङ्गतं स्थिरजीविनामानं प्रणम्य प्रोवाच । तात ! यदेते मया पृष्टाः सचिवास्तावदत्रस्थित-स्यापि तव, तत्परीक्षार्थं, येन त्वं सकलं श्रुत्वा यदुचितं तन्मे समादिशसि । तद्युक्तं भवति तत्समादेश्यम् । स आह, वत्स ! सर्व्वैरप्येतैर्नीतिशास्त्राश्रयमुक्तं सचिवैः । तदुपयु-ज्यते स्वकालोचितं सर्व्वमेव ; परमेष द्वैधीभावस्य कालः । उक्तञ्च, अविश्वासं सदा तिष्ठेत्सन्धिना विग्रहेण च ।

द्वैधीभावं समाश्रित्य पापे शत्रौ बलीयसि ॥ ६० ॥

तच्छत्रुं विश्वास्याविश्वस्तैर्लोभं दर्शयद्भिः सुखेनोच्छिद्यते रिपुः । उक्तञ्च,

उच्छेद्यमपि विद्वांसो वर्द्धयन्त्यरिमेकदा ।

गुडेन वर्द्धितः श्लेष्मा सुखं वृद्ध्या निपात्यते ॥ ६१ ॥

तथा च, स्त्रीणां शत्रोः कुमित्रस्य पण्यस्त्रीणां विशेषतः ।

यो भवेदेकभावेन न स जीवति मानवः ॥ ६२ ॥

कृत्यं देवद्विजातीनामात्मनश्च गुरोस्तथा ।

एकभावेन कर्त्तव्यं शेषं द्वैधं समाश्रितम् ॥ ६३ ॥

एको भावः सदा शस्तो यतीनां भावितात्मनाम्।
स्त्रीलुब्धानां न लोकानां विशेषेण महीभृताम्॥ ६४॥

तद्द्वैधीभावं संश्रितस्य तव स्वस्थाने वासो भविष्यति, लोभान्ययाश्च शत्रुमुत्पाटयिष्यसि। अपरं यदि किञ्चिच्छिद्रं तस्य पश्यसि तत्त्वा व्यापादयिष्यसि। मेघवर्ण आह, तात! मया नोऽविदितसंश्रयः, तत्कथं तस्य छिद्रं ज्ञास्यामि। स्थिरजीव्याह, वत्स! न केवलं स्थानं छिद्राण्यपि तस्य प्रकटीकरिष्यामि प्रणिधिभिः। उक्तञ्च,

गावो गन्धेन पश्यन्ति वेदैःपश्यन्ति वै द्विजाः।
चारैः पश्यन्ति राजान चक्षुर्भ्यामितरे जनाः॥ ६५॥

उक्तञ्चात्र विषये, यस्तीर्थानि निजे पक्षे परपक्षे विशेषतः।
गुप्तैश्चारैर्नृपो वेत्ति न स दुर्गतिमाप्नुयात्॥ ६६॥

मेघवर्ण आह, तात! कानि तीर्थान्युच्यन्ते कति सङ्ख्यानि च; कीदृशा गुप्तचराः, तत्सर्वं निवेद्यतामिति। स आह, अत्र विषये भगवता नारदेन युधिष्ठिरः प्रोक्तः। यच्छत्रुपक्षेऽष्टादशतीर्थानि स्वपक्षे पञ्चदश। त्रिभिस्त्रिभिर्गुप्तचरैस्तानि ज्ञेयानि। तैर्ज्ञातैः स्वपक्षः परपक्षश्च वश्यो भवति। उक्तञ्च नारदेन युधिष्ठिरं प्रति,

कच्चिदष्टादशान्येषु स्वपक्षे दशपञ्च च।
त्रिभिस्त्रिभिरविज्ञातैर्वेत्सि तीर्थानि चारकैः॥ ६७॥

तीर्थशब्देनायुक्तकर्माभिधीयते। तद्यदि तेषां कुत्सितं भवति तत्स्वामिनोऽभिघाताय भवति। प्रधानं भवति तद्-

द्वारपालः
इये स्यादिति । तद्यथा—मन्त्री पुरोहितः सेनापतिर्युव-
आरक्षक: अन्तःपालः
राजो दौवारिकोऽन्तर्वासिकः प्रशासकः समाहर्त्तृसन्निधातृ-
प्रदेष्टृज्ञापकाः साधनाध्यक्षो गजाध्यक्षः कोशाध्यक्षो दुर्ग-
पालकरपालसीमापालप्रोत्कटभृत्याः । एषां भेदेन द्राग्रिपुः
साध्यते । स्वपक्षे च देवी जननी कञ्चुकी मालिकः शय्या-
पालकः स्पशाध्यक्षः सांवत्सरिको भिषग्जलवाहकस्ताम्बूल-
वाहका आचार्योऽङ्गरक्षकः स्थानचिन्तकश्छत्रधरी विलासिनी।
एषां वैरद्वारेण स्वपक्षे विघातः । तथा च,

वैद्यसांवत्सरिकाचार्याः स्वपक्षेऽधिकृतारचराः ।
यथा हि तुण्डिकोन्मत्ताः सर्वं जानन्ति शत्रुषु ॥६८॥

तथाच, कृत्याकृत्यविदस्तीर्थेरन्तः प्रणिधयः पदम् ।
विदांकुर्व्वन्तु महतस्तलं विद्विषदम्भसः ॥ ६८ ॥

एवं मन्त्रिवाक्यमाकर्ण्यान्तरे मेघवर्ण आह, तात !
अथ किं निमित्तमेवंविधं प्राणान्तिकं सदैव वायसोलूकानां
वैरम् । स आह, वत्स । कदाचिद्धंसशुकबककोकिलचातको-
लूकमयूरकपोतपारावतविष्किरप्रभृतयः सर्वेऽपि पक्षिणः
समेत्य सोद्वेगं मन्त्रयितुमारब्धाः । अहो ! अस्माकं ,तावद्
वैनतेयो राजा—स च वासुदेवभक्तः न काममपि चिन्तामस्माक
करोति । तत् किं तेन वृथास्वामिना यो लुब्धकपाशैर्नित्य
निबध्यमानानां न रक्षां विधत्ते । उक्तञ्च,

यो न रक्षति वित्रस्तान् पीड्यमानान् परैः सदा ।
जन्तून् पार्थिवरूपेण स कृतान्तो न संशय, ॥ ७० ॥

यदि न स्यान्नरपतिः सम्यङ्नेता ततः प्रजाः ।
अकर्णधारा जलधौ विप्लवेतेह नौरिव ॥ ७१ ॥
षडिमान् पुरुषो जह्याद्भिन्नां नावमिवार्णवे ।
अप्रवक्तारमाचार्यमनधीयानमृत्विजम् ॥ ७२ ॥
अरक्षितारं राजानं भार्यां चाप्रियवादिनीम् ।
ग्रामकामञ्च गोपालं वनकामञ्च नापितम् ॥ ७३ ॥

तत्सञ्चिन्त्यान्यः कश्चिद्राजा विहङ्गमानां क्रियतामिति अथ तैर्भद्राकारमुलूकमवलोक्य सर्वैरभिहितम् । यदेष उलूको राजास्माकं भविष्यति, तदानीयन्तां नृपाभिषेकसम्भारा इति । अथ साधिते विविधतीर्थोदके प्रगुणीकृतेऽष्टोत्तरशतमूलिकासंघाते प्रदत्ते सिंहासने वर्तिते सप्तद्वीपसमुद्रभूधरविचित्रे धरित्रीमण्डले प्रसारिते व्याघ्रचर्मण्यापूरितेषु हेमकुम्भेषु दीपितेषु वाद्येषु च सज्जीकृतेषु दर्पणादिषु माङ्गल्यवस्तुषु पठत्सु वन्दिमुख्येषु वेदोच्चारणपरेषु समुदितमुखेषु ब्राह्मणेषु गीतपरे युवतीजन आनीतायामग्रमहिष्यां कृकालिकायामुलूकोऽभिषेकार्थं यावत्सिंहासनमुपविशति तावत्कुतोऽपि वायसः समायातः । सोऽचिन्तयत्, अहो ! किमेष सकलपक्षिसमागमो महोत्सवश्च । अथ ते पक्षिणस्तं दृष्ट्वा मिथः प्रोचुः । पक्षिणां मध्ये वायसश्चतुरः श्रूयते । उक्तञ्च,

नराणां नापितो धूर्तः पक्षिणां चैव वायसः ।
दंष्ट्रिणाञ्च शृगालस्तु श्वेतभिक्षुस्तपस्विनाम् ॥ ७४ ॥

तदस्यापि वचनं ग्राह्यम् । उक्तञ्च,

बहुधा बहुभिः सार्द्धं चिन्तिताः सुनिरूपिताः ।
कथञ्चिन्न विनीयन्ते विद्वद्भिर्यिन्तिता नयाः ॥ ७५ ॥

अथ वायसः समेत्य तानाह, अहो ! किं महाजनसमागमोऽयं परममहोत्सवश्च । ते प्रोचुः, भो ! नास्ति कश्चिद्विहङ्गानां राजा । तदस्योलूकस्य विहङ्गराज्याभिषेको निरूपितस्तिष्ठति समस्तपक्षिभिः । तत्त्वमपि स्वमतं देहि ; प्रस्तावे समागतोऽसि । अथासौ काको विहस्याह । अहो ! न युक्तमेतद्यन्मयूरहंसकोकिलचक्रवाकशुककारण्डवहारीतसारसादिषु पक्षिप्रधानेषु विद्यमानेषु दिवान्धस्यास्य करालवक्त्रस्याभिषेकः क्रियते । तन्नैतन्मम मतम् ! यतः,

वक्रनासं सुजिह्माक्षं क्रूरमप्रियदर्शनम् ।
अक्रुद्धस्येदृशं वक्त्रं भवेत् क्रुद्धस्य कीदृशम् ॥७६॥

तथाच, स्वभावरौद्रमत्युग्रं क्रूरमप्रियवादिनम् ।
उलूकं नृपतिं कृत्वा का नः सिद्धिर्भविष्यति ॥ ७७ ॥

अपरं वैनतेये स्वामिनि स्थिते किमेष दिवान्धः क्रियते राजा ; तद्यद्यपि गुणवान् भवति तथाप्येकस्मिन् स्वामिनि स्थिते नान्यो भूपः प्रशस्यते ।

एक एव हितार्थाय तेजस्वी पार्थिवो भुवः ।
युगान्त इव भास्वन्तो बहवोऽत्र विपत्तये ॥ ७८ ॥

तत्तस्य नाम्नापि यूयं परेषामगम्या भविष्यथ । उक्तञ्च,

गुरूणां नाममात्रेऽपि गृहीते स्वामिसम्भवे ।
दुष्टानां पुरतः क्षेमं तत्क्षणादेव जायते ॥ ७९ ॥

तथाच, व्यपदेशेन महतां सिद्धिः सञ्जायते परा ।
 शशिनो व्यपदेशेन वसन्ति शशकाः सुखम् ॥ ८० ॥
 त ऊचुः, कथमेतत् ? स आह,

## कथा १ ।

अस्ति कस्मिंश्चिद्वने चतुर्दन्तो नाम महागजो यूथाधिपः प्रतिवसति स्म । तत्र कदाचिन्महत्यनावृष्टिः सञ्जाता प्रभूतवर्षाणि यावत् । तया तड़ागह्रदपल्वलसरांसि शोषमुपागतानि । अथ तैः समस्तगजैः स गजराजः प्रोक्तः । देव ! पिपासाकुला गजकलभा मृतप्राया अपरे मृताश्च । तदन्विष्यतां कश्चिज्जलाशयो यत्र जलपानेन स्वस्थतां व्रजन्ति, ततश्चिरं ध्यात्वा तेनाभिहितम् । अस्ति महान् ह्रदो विविक्ते प्रदेशे स्थलमध्यगत. पातालगङ्गाजलेन सदैव पूर्णः । तत्तत्र गम्यतामिति । तथानुष्ठिते पञ्चरात्रमुपसर्पद्भिः समासादितस्तैः स ह्रदः । तत्र स्वेच्छया जलमवगाह्यास्तमनवेलायां निष्क्रान्ताः । तस्य च ह्रदस्य समन्ताच्छशकबिला असंख्या. सुकोमलभूमौ तिष्ठन्ति । तेऽपि समस्तैरपि तैर्गजैरितस्ततो भ्रमद्भि' परिभग्नाः । बहवः शशका भग्नपादशिरोग्रीवा विहिताः केचिन्मृता' केचिज्जीवशेषा जाताः । अथ गते तस्मिन् गजयूथे शशकाः सोद्वेगा गजपादक्षुण्णसमावासाः केचिद्भग्नपादा अन्ये जर्जरितकलेवरा रुधिरप्लुता ,अन्ये हतशिशवो वाष्पपिहितलोचना' समेत्य मिथो मन्त्रं चक्रुः ।

अहो ! विनष्टा वयम्, नित्यमेवैतद्गजयूथमागमिष्यति यतो नान्यत्र जलमस्ति। तत्सर्व्वेषां नाशो भविष्यति। उक्तञ्च,

स्पृशन्नपि गजो हन्ति जिघ्रन्नपि भुजङ्गमः।
हसन्नपि नृपो हन्ति मानयन्नपि दुर्जनः॥ ८१॥

तच्चिन्त्यतां कश्चिदुपायः, तत्रैकः प्रोवाच। गम्यतां देशत्यागेन, किमन्यत्; उक्तञ्च मनुना व्यासेन च,

त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत्।
ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत्॥ ८२॥

क्षेम्यां सस्यप्रदां नित्यं पशुवृद्धिकरीमपि।
परित्यजेन्नृपो भूमिमात्मार्थमविचारयन्॥ ८३॥

आपदर्थे धनं रक्षेद्दारान् रक्षेद्धनैरपि।
आत्मानं सततं रक्षेद्दारैरपि धनैरपि॥ ८४॥

ततश्चान्ये प्रोचुः। भोः। पितृपैतामहं स्थानं न शक्यते सहसा त्यक्तुम्। तत् क्रियतां तेषां कृते काचिद्विभीषिका यत् कथमपि दैवान्न समायान्ति। उक्तञ्च,

निर्व्विषेणापि सर्पेण कर्त्तव्या महती फटा।
विषं भवतु मा वस्तु फटाटोपो भयङ्करः॥ ८५॥

अथान्ये प्रोचुः। यद्येवं ततस्तेषां महद्विभीषिकास्थानमस्ति येन नागमिष्यन्ति। सा च चतुरदूतायत्ता विभीषिका। यतो विजयदत्तो नाम राजास्मत्स्वामी शशकचन्द्रमण्डले निवसति तत्प्रेष्यतां कश्चिन्मिथ्यादूतो यूथाधिपसकाशं यच्चन्द्रस्तावत् हृदे आगच्छन्तं निषेधयति यतोऽस्मत्परिग्र-

ह्रोऽस्य समन्ताद्वसति। एवमभिहिते यद्वेयवचनात्कदापि निवर्त्तते। अथान्ये प्रोचुः, यद्येवं तदस्ति लम्बकर्णो नाम शशकः। स च वचनरचनाचतुरो दूतकर्मज्ञः। स तत्र प्रेष्यतामिति। उक्तञ्च,

साकारो निःस्पृहो वाग्मी नानाशास्त्रविचक्षणः।
परचित्तावगन्ता च राज्ञो दूतः स इष्यते॥ ८६॥

अन्यञ्च, यो मूर्खं लौल्यसम्पन्नं राजद्वारिकमाचरेत्।
मिथ्यावादं विशेषेण तस्य कार्य्यं न सिध्यति॥ ८७॥

तदन्विष्यतां यद्यस्माद्व्यसनादात्मनां सुनिर्मुक्तिः। अथान्ये प्रोचुः, अहो! युक्तमेतत्। नान्यः कश्चिदुपायोऽस्माकं जीवितस्य; तथैव क्रियताम्। अथ लम्बकर्णो गजयूथाधिपसमीपे निरूपितो गतश्च। तथानुष्ठिते लम्बकर्णोऽपि गजमार्गमासाद्यागम्यं स्थलमारुह्य तं गजमुवाच। भो भो दुष्ट गज! किमेवं लीलया निःशङ्कतयात्र चन्द्रह्रद आगच्छसि? तन्नागन्तव्यं निवर्त्यतामिति। तदाकर्ण्य विस्मितमना गज प्राह, भोः! कस्त्वम्? स आह, अहं विजयदत्तो नाम शशकश्चन्द्रमण्डले वसामि। साम्प्रतं भगवता चन्द्रमसा तव पार्श्वे प्रहितो दूतो जानात्येव भवान्, यथार्थवादिनो दूतस्य न दोषः करणीयः दूतमुखा हि राजानः सर्व्वएव; उक्तञ्च,

उद्यतेष्वपि शस्त्रेषु बन्धुवर्गवधेष्वपि।
परुषाण्यपि जल्पन्तो वध्या दूता न भूभुजा॥ ८८॥

तच्छ्रुत्वा स आह, भोः शशक! तत्कथय भगवतश्चन्द्र-

मम: सन्देशं; येन सत्वरं क्रियते। स आह, भवतातीतदिवसे यूथेन सहागच्छता प्रभूताः शशका निपातिताः। तत्किं न वेत्ति भवान् यन्मम परिग्रहोऽयम्? तद्यदि जीवितेन ते प्रयोजनं तदा केनापि प्रयोजनेनात्र ह्रदे नागन्तव्यमिति सन्देशः। गज आह, अथ क्व वर्त्तते भगवान् स्वामी चन्द्रः? स आह, अत्र ह्रदे साम्प्रतं शशकानां भवद्यूथमथितानां हतशेषाणां समाश्वासनाय समायातस्तिष्ठति। अहं पुनस्तवान्तिकं प्रेषितः। गज आह, यद्येवं तद्दर्शय मे तं स्वामिनं येन प्रणम्यान्यत्र गच्छामः। शशक आह, भोः! आगच्छ मया सहैकाकी येन दर्शयामि। तथानुष्ठिते शशको निशासमये तं गजं ह्रदतीरे नीत्वा जलमध्ये स्थितं चन्द्रबिम्बमदर्शयत्। आह च, भोः! एष नः स्वामी जलमध्ये समाधिस्थस्तिष्ठति तन्निभृतं प्रणम्य सत्वरं व्रजेति। नो चेत्समाधिभङ्गाद्भूयोऽपि प्रभूतं कोपं करिष्यति। अथ गजोऽपि त्रस्तमनास्तं प्रणम्य पुनर्गमनाय प्रस्थितः शशकाश्च तद्दिनादारभ्य सपरिवाराः सुखेन स्वेषु स्थानेषु तिष्ठन्ति स्म। अतोऽहं ब्रवीमि।

व्यपदेशेन महतां सिद्धिः सञ्जायते परा।
शशिनो व्यपदेशेन वसन्ति शशकाः सुखम्॥ ८९॥

अपि च, क्षुद्रमलसं कापुरुषं व्यसनिनमकृतज्ञम्।
पृष्ठप्रलपनशीलं स्वामित्वेन नाभियोजयेज्जीवितकामः॥ ९०॥

क्षुद्रमर्थपतिं प्राप्य न्यायान्वेषणतत्परौ।

उभावपि वयं प्राप्तौ पुरा शशकपिञ्जलौ ॥ ८१ ॥
ते प्रोचुः, कथमेतत् ? स आह,

## कथा २ ।

अस्ति कस्मिंश्चिद्वृक्षे पुराहं वसामि । तत्राधस्तात् कोटरे कपिञ्जलो नाम चटकः प्रतिवसति स्म । अथ सदैवास्तमनवेलायामागतयोर्द्वयोरनेकसुभाषितगोष्ठ्या देवर्षिब्रह्मर्षिराजर्षिपुराणचरितकीर्त्तनेन च पर्यटनदृष्टानेककौतूहलप्रकथनेन च परमसुखमनुभवतोः कालो व्रजति । अथ कदाचित् कपिञ्जलः प्राणयात्रार्थमन्यैश्चटकैः सहान्यं पक्वशालिप्राय देशं गतः । ततो यावन्निशासमयेऽपि नायातस्तावदहं सोद्वेगमनास्तद्वियोगदुःखितश्चिन्तितवान् । अहो ! किमद्य कपिञ्जलो नायातः । किं केनापि पाशेन बद्ध ? उताहोस्वित् केनापि व्यापादित ? सर्वथा यदि कुशली भवति तन्मां विना न तिष्ठति । एवं मे चिन्तयतो बहून्यहानि व्यतिक्रान्तानि । ततश्च तत्र कोटरे कदाचिच्छीघ्रगो नाम शशकोऽस्तमनवेलायामागत्य प्रविष्टः । मयापि कपिञ्जलनिराशत्वेन न निवारितः । अथान्यस्मिन्नहनि कपिञ्जलः शालिभक्षणादतीव पीवरतनुः स्वमाश्रयं स्मृत्वा भूयोऽप्यत्रैव समायातः । अथवा साध्विदमुच्यते ।

न तादृग्जायते सौख्यमपि स्वर्गे शरीरिणाम् ।
दारिद्र्येऽपि हि यादृक्स्यात् स्वदेशे स्वपुरे गृहे ॥८२॥

अथासौ कोटरान्तर्गतं शशकं दृष्ट्वा साक्षेपमाह, भो शशक! न त्वया सुन्दरं कृतं यन्ममावसथस्थाने प्रविष्टोऽसि, तच्छीघ्रं निष्क्रम्यताम्। शशक आह, न तवेदं गृहं किन्तु ममैव। तत् किं मिथ्या परुषाणि जल्पसि। उक्तञ्च,

वापीकूपतड़ागानां देवालयकुजन्मनाम्।
उत्सर्गात्परतः स्वाम्यमपि कर्त्तुं न शक्यते॥ ८३॥

तथा च, प्रत्यक्षं यस्य यद्भुक्तं क्षेत्राद्यं दश वत्सरान्।
तत्र भुक्तिः प्रमाणं स्यान्न साक्षी नाक्षराणि वा॥ ८४॥

मानुषाणामयं न्यायो मुनिभिः परिकीर्त्तितः।
तिरश्चाञ्च विहङ्गानां यावदेव समाश्रयः॥ ८५॥

तन्ममैतद्गृहं न तवेति। कपिञ्जल आह, भो! यदि स्मृतं प्रमाणीकरोषि तदागच्छ मया सह येन स्मृतिपाठकं पृष्ट्वा स यस्य ददाति स गृह्णातु। तथानुष्ठिते मयापि चिन्तितम्। किमत्र भविष्यति। मया द्रष्टव्योऽयं न्यायः। ततः कौतुकादहमपि तावत् प्रस्थितः। अत्रान्तरे तीक्ष्णदंष्ट्रो नामारण्यमार्जारस्तयोर्विवादं श्रुत्वा मार्गासन्नं नदीतटमासाद्य कृतकुशोपग्रहो निमीलितैकनयन ऊर्ध्वबाहुरर्द्धपादस्पृष्टभूमिः श्रीसूर्य्याभिमुख इमां धर्म्मोपदेशनामकरोत्। अहो! असारोऽयं संसारः। क्षणभङ्गुराः प्राणाः। स्वप्नसदृशः प्रियसमागमः। इन्द्रजालवत् कुटुम्बपरिग्रहोऽयम्। तद्धर्म्मं मुक्त्वा नान्या गतिरस्ति। उक्तञ्च।

अनित्यानि शरीराणि विभवो नैव शाश्वतः।

नित्यसंनिहितो मृत्युः कर्त्तव्यो धर्मसंग्रहः ॥ ८६ ॥
यस्य धर्मविहीनानि दिनान्यायान्ति यान्ति च ।
स लोहकारभस्त्रेव श्वसन्नपि न जीवति ॥ ८७ ॥
नाच्छादयति कौपिनं न दंशमशकापहम् ।
शुनः पुच्छमिवव्यर्थं पाण्डित्यं धर्मवर्जितम् ॥ ८८ ॥
अन्यच्च, पुलका इव धान्येषु पूतिका इव पक्षिषु ।
मशका इव मर्त्येषु येषां धर्मो न कारणम् ॥ ८९ ॥
श्रेयः पुष्पफलं वृक्षाद्दध्नः श्रेयो घृतं स्मृतम् ।
श्रेयस्तैलञ्च पिण्याकाच्छ्रेयान् धर्मस्तु मानुषात् ॥१०० ॥
सृष्टा मूत्रपुरीषार्थमाहाराय च केवलम् ।
धर्महीनाः परार्थाय पुरुषाः पशवो यथा ॥ १०१ ॥
स्थैर्यं सर्वेषु कृत्येषु शंसन्ति नयपण्डिताः ।
बह्वन्तराययुक्तस्य धर्मस्य त्वरिता गतिः ॥ १०२ ॥
सङ्क्षेपात् कथ्यते धर्मो जनाः किं विस्तरेण वः ।
परोपकारः पुण्याय पापाय परपीडनम् ॥ ॥ १०३॥
श्रूयतां धर्मसर्वस्वं श्रुत्वा चैवावधार्यताम् ।
आत्मनः प्रतिकूलानि परेषां न समाचरेत् ॥ १०४ ॥

अथ तस्य तां धर्मोपदेशनां श्रुत्वा शशक आह, भो भो कपिञ्जल ! एष नदीतीरे तपस्वी धर्मवादी तिष्ठति । तदेनं पृच्छावः कपिञ्जल आह, ननु स्वभावतोऽस्माकं शत्रुभूतोऽस्ति । तद्दूरे स्थितौ पृच्छावः । कदाचिदस्य व्रतवैकल्यं सम्पद्यते । ततो दूरस्थितावूचतुः । भो भोः तपस्विन् !

धर्म्मदेशक ! आवयोर्विवादो वर्त्तते। तद्धर्म्मशास्त्रद्वारेणास्माकं निर्णयं देहि; यो हीनवादी स ते भक्ष्य इति। स आह, भद्रौ! मा मैवं वदतम्। निवृत्तोऽहं नरकपातमार्गात्। अहिंसैव धर्म्ममार्गः। उक्तञ्च।

अहिंसापूर्व्वको धर्म्मो यस्मात् सद्भिरुदाहृतः।
यूकमत्कुणदंशादींस्तस्मात्तानपि रक्षयेत्॥ १०५॥
हिंसकान्यपि भूतानि यो हिंसति स निर्घृणः।
स याति नरकं घोरं किं पुनर्यः शुभानि च॥ १०६॥

एतेऽपि ये याज्ञिका यज्ञकर्म्मणि पशून् व्यापादयन्ति ते मूर्खाः परमार्थं श्रुतेर्न जानन्ति। तत्र किलैतदुक्तं अजैर्यष्टव्यम्। अजा व्रीहयस्तावत्सप्तवार्षिकाः कथ्यन्ते न पुनः पशुविशेषाः।

उक्तञ्च, वृक्षांश्छित्वा पशून् हत्वा कृत्वा रुधिरकर्दमम्।
यद्येवं गम्यते स्वर्गे—नरकं केन गम्यते?॥ १०७॥

तन्नाहं भक्षयिष्यामि। परं जयपराजयनिर्णयं करिष्यामि। किन्त्वहं वृद्धो दूरात् युवयोर्भाषान्तरं सम्यग्न शृणोमि। एवं ज्ञात्वा मम समीपवर्त्तिनौ भूत्वा ममाग्रे न्यायं वदतम्। येन विज्ञाय विवादपरमार्थं वचो वदतो मे परलोकबाधो न भवति। उक्तञ्च यतः,

मानाद्वा यदि वा लोभात् क्रोधाद्वा यदि वा भयात्।
यो न्यायमन्यथा ब्रूते स याति नरकं नरः॥ १०८॥
पञ्च पश्वनृते हन्ति दश हन्ति गवानृते।

शतं कन्यानृते हन्ति सहस्रं पुरुषानृते ॥ १०९ ॥
उपविष्टः सभामध्ये यो न वक्ति स्फुटं वचः ।
तस्माद्दूरेण स त्याज्यो न्यायो वा कीर्तयेदृतम् ॥ ११० ॥

तस्माद्विश्रब्धौ मम कर्णोपान्तिके स्फुटं निवेदयतम् । किं बहुना, तेन क्षुद्रेण तथा तौ तूर्णं विश्वासितौ, यथा तस्योत्सङ्गवर्त्तिनौ सञ्जातौ । ततश्च तेनापि समकालमेवैकः पादान्तेनाक्रान्तः, अन्यो दंष्ट्राक्रकचेन च । ततो गतप्राणौ भक्षिताविति । अतोऽहं ब्रवीमि,

क्षुद्रमर्थपतिं प्राप्य न्यायान्वेषणतत्परौ ।
उभावपि क्षयं प्राप्तौ पुरा शशकपिञ्जलौ ॥ १११ ॥

भवन्तोऽप्येन दिवान्धं क्षुद्रमर्थपतिमासाद्य रात्र्यन्धाः सन्तः शशकपिञ्जलमार्गेण यास्यन्ति । एवं ज्ञात्वा यदुचितं तद्विधेयमतः परं । अथ तस्य तद्वचनमाकर्ण्य साधु अनेनाभिहितमित्युक्त्वा भूयोऽपि पार्थिवार्थं समेत्य मन्त्रयिष्यामश्च इति ब्रुवाणाः सर्वे पक्षिणो यथाभिमतं जग्मुः । केवलमवशिष्टो भद्रासनोपविष्टोऽभिषेकाभिमुखो दिवान्धः कृकालिकया सहास्ते । आह च कः कोऽत्र । भो भोः । किमद्यापि न क्रियते ममाभिषेकः ? इति श्रुत्वा कृकालिकयाभिहितम् । भद्र ! तवाभिषेके कृतोऽयं विघ्नो वायसेन । गताश्च सर्वेऽपि विहगा यथेप्सितासु दिक्षु केवलमेकोऽयं वायसोऽवशिष्टः केनापि हेतुना तिष्ठति तत् त्वरितमुत्तिष्ठ येन त्वां स्वाश्रयं प्रापयामि । तच्छ्रुत्वा सविषादमुलूको वायसं प्राह, भो भो दुष्टा-

त्मन्। किं मया तेऽपकृतम्। यद्राज्याभिषेको मे विघ्नितः। तदद्य प्रभृति साम्प्रतमावयोर्वैरं सञ्जातम्। उक्तञ्च,

रोहति सायकैर्विद्धं छिन्नं रोहति चासिना।
वचो दुरुक्तं बीभत्सं न प्ररोहति वाक्क्षतम्॥११२॥

इत्येवमभिधाय कृकालिकया सह स्वाश्रयं गतः, अथ भयव्याकुलो वायसो व्यचिन्तयत्। अहो। अकारणं वैरमासादितं मया। किमिदं व्याहृतम्। उक्तञ्च,

अदेशकालज्ञमनायतिक्षमं
यदप्रियं लाघवकारि चात्मनः।
योऽत्राब्रवीत् कारणवर्जितं वचो
न तद्वचः स्याद्विषमेव तद्वचः॥ ११३॥

बलोपपन्नोऽपि हि बुद्धिमान्नरः
परं नयेन्न स्वयमेव वैरिताम्।
भिषङ्ममास्तीति विचिन्त्य भक्षये-
दकारणात् को हि विचक्षणो विषम्॥ ११४॥

परपरिवादः परिषदि न कथञ्चित् पण्डितेन वक्तव्यः।
सत्यमपि तन्न वाच्यं यदुक्तमसुखावहं भवति॥ ११५॥

सुहृद्भिराप्तैरसकृद्विचारितं
स्वयञ्च बुद्ध्या प्रविचारिताश्रयम्।
करोति कार्य्यं खलु यः स बुद्धिमान्
स एव लक्ष्म्या यशसाञ्च भाजनम्॥ ११६॥

एवं विचिन्त्य काकोऽपि प्रयातः। तदा प्रभृत्यस्माभिः

सह कौशिकानामन्वयगतं वैरमस्ति । मेघवर्ण आह, तात ! एवं गतेऽस्माभिः किं कृत्यमस्ति । स आह, वत्स ! एवं गतेऽपि षाड्गुण्यादपरः स्थूलोऽभिप्रायोऽस्ति तमङ्गीकृत्य स्वयमेवाहं तद्विजयाय यास्यामि रिपून् वञ्चयित्वा वधिष्यामि । उक्तञ्च यतः,

बहुबुद्धिसमायुक्ताः सुविज्ञाना बलोत्कटान् ।
शक्ता वञ्चयितुं धूर्त्ता ब्राह्मणं छागलादिव ॥ ११७ ॥

मेघवर्ण आह, कथमेतत् ? सोऽब्रवीत् ।

## कथा ३ ।

अस्ति कस्मिंश्चिदधिष्ठाने मित्रशर्म्मा नाम ब्राह्मणः कृताग्निहोत्रपरिग्रहः प्रतिवसति स्म । स कदाचिन्माघमासे सौम्यानिले प्रवाति मेघाच्छादिते गगने मन्दं मन्दं प्रवर्षति पर्जन्ये पशुप्रार्थनाय किञ्चिद्ग्रामान्तरं गतः, कञ्चिद् यजमानो याचितः । भो यजमान ! आगामिन्याममावस्यायामहं यक्ष्यामि यज्ञम् । तद्देहि मे पशुमेकम् । अथ तेन तस्य शास्त्रोक्तः पीवरतनुः पशुः प्रदत्तः । सोऽपि तं समर्थमितश्चेतश्च गच्छन्तं विज्ञाय स्कन्धे कृत्वा सत्वरं स्वपुराभिमुखः प्रतस्थे । अथ तस्य गच्छतो मार्गे त्रयो धूर्त्ताः क्षुत्क्षामकण्ठाः सम्मुखा बभूवुः । तैश्च तादृशं पीवरतनुं पशुं स्कन्धे आरूढमवलोक्य मिथोऽभिहितं ; अहो ! अस्य पशोर्भक्षणादद्यतनीयो हिमपातो व्यर्थतां नीयते ।

तदेनं वञ्चयित्वा पशुमादाय शीतखाद्यं कुर्म्मः । अथ तेषामेकतमो वेषपरिवर्त्तनं विधाय सम्मुखो भूत्वापमार्गेण तमाहिताग्निमूचे । भो ! भो ! बालाग्निहोत्रिन् ! किमेवं जनविरुद्धं हास्यकार्य्यमनुष्ठीयते । यदेष सारमेयोऽपवित्रः स्कन्धाधिरूढ़ो नीयते । उक्तञ्च यतः,

श्वानकुक्कुटचाण्डालाः समस्पर्शाः प्रकीर्त्तिताः ।
रासभोष्ट्रौ विशेषेण तस्मात् तान्नैव संस्पृशेत् ॥११८॥

ततश्च तेन कोपाभिभूतेनाभिहितम् । अहो ! किमन्धो भवान् ? यत् पशुं सारमेयं प्रतिपादयसि । सोऽब्रवीत्, ब्रह्मन् ! कोपस्त्वया न कार्य्यः । यथेच्छया गम्यतामिति । अथ यावत् किञ्चिदध्वनोऽन्तरं गच्छति, तावत् द्वितीयो धूर्त्तः सम्मुखः समुपेत्य तमुवाच । भो ब्रह्मन् ! कष्टं कष्टं यद्यपि वल्लभोऽयं ते मृतवत्सः, तथापि स्कन्धमारोपयितुमयुक्तम् । उक्तञ्च यतः,

तिर्य्यञ्चं मानुषं वापि यो मृतं संस्पृशेत् कुधीः ।
पञ्चगव्येन शुद्धिः स्यात् तस्य चान्द्रायणेन च ॥ ११९॥

अथासौ सकोपमिदमाह, भोः ! किमन्धो भवान् ? यत् पशुं मृतवत्सं वदसि । सोऽब्रवीत् । भगवन् ! मा कोपं कुरु । अज्ञानान्मयाभिहितम् । तत् त्वमात्मरुचिरं समाचरेति । अथ यावत् स्तोकं वनान्तरं गच्छति तावत् तृतीयोऽन्यवेषधारी धूर्त्तः सम्मुखः समुपेत्य तमुवाच । भो ! अयुक्तमेतत् । यत् त्वं रासभं स्कन्धाधिरूढ़ं नयसि । तत् त्यज्यतामेष ।

उक्तञ्च, यः स्पृशेद्रासभं मर्त्यो ज्ञानादज्ञानतोऽपि वा ।
सचैलं स्नानमुद्दिष्टं तस्य पापप्रशान्तये ॥ १२० ॥

तत् त्यजैनं यावदन्यः कश्चिन्न पश्यति । अथासौ तं पशुं रासभं मन्यमानो भयाद्भूमौ प्रक्षिप्य स्वगृहमुद्दिश्य मपलायितः । ततस्ते त्रयो मिलित्वा तं पशुमादाय यथेच्छया भक्षितुमारब्धा । अतोऽहं ब्रवीमि ।

बहुबुद्धिसमायुक्ताः सुविज्ञाना बलोत्कटान् ।
शक्ता वञ्चयितुं धूर्त्ता ब्राह्मणं छागलादिव ॥ १२१ ॥

अथवा साध्विदमुच्यते,

अभिनवसेवकविनयैः प्राघुणकोक्तैर्विलासिनीरुदितैः ।
धूर्त्तजनवचननिकरैरिह कश्चिदवञ्चितो नास्ति ॥ १२२ ॥

किञ्च दुर्बलैरपि बहुभिः सह विरोधो न युक्तः ।

उक्तञ्च, बहवो न विरोद्धव्या दुर्जया हि महाजनाः ।
स्फुरन्तमपि नागेन्द्रं भक्षयन्ति पिपीलिकाः ॥ १२३ ॥

मेघवर्ण आह, कथमेतत् ? स्थिरजीवी कथयति ।

## कथा ४ ।

अस्ति कस्मिंश्चिद्वल्मीके महाकायः कृष्णसर्पोऽतिदर्पो नाम । स कदाचिद्बिलानुसारमार्गमुत्सृज्यान्येन लघुद्वारेण निष्क्रामितुमारब्धः । निष्क्रामतश्च तस्य महाकायत्वाद्दैववशतया लघुविवरत्वाच्च शरीरे व्रणः समुत्पन्नः । अथ व्रणशोणितगन्धानुसारिणीभिः पिपीलिकाभिः सर्व्वतो व्याप्तो व्याकुलीकृतश्च ।

कति व्यापादयति कति वा ताड़यति । अथ प्रभूतत्वाद्वि-स्फारित बहुव्रणाभिः क्षतसर्व्वाङ्गोऽतिदर्पः पञ्चत्वमुपागतः । अतोऽहं ब्रवीमि ।

बहवो न विरोद्धव्या दुर्जया हि महाजनाः ।
स्फुरन्तमपि नागेन्द्रं भक्षयन्ति पिपीलिकाः ॥ १२४ ॥

तदत्रास्ति किञ्चिद् मे वक्तव्यमेव । तदवधार्य्य यथोक्तमनुष्ठीयताम् । मेघवर्ण आह, तत् समादेशय--तवादेशो नान्यथा कर्त्तव्यः । स्थिरजीवी प्राह, वत्स । समाकर्णय तर्हि सामादीनतिक्रम्य यो मया पञ्चम उपायो निरूपितः । तन्मां विपक्षभूतं कृत्वा, अतिनिष्ठुरवचनैर्निर्भर्त्स्य, यथा विपक्षप्रणिधीनां प्रत्ययो भवति, तथा समाहृतरुधिरैरालिप्य, अस्यैव न्यग्रोधस्याधस्तात् प्रक्षिप्य मां, गम्यतां पर्व्वतं ऋष्यमूकं प्रति ; तत्र सपरिवारस्तिष्ठ । यावदहं समस्तान् सपत्नान् सुप्रणीतेन विधिना विश्वासाभिमुखान् कृत्वा कृतार्थो ज्ञातदुर्गमध्यः दिवसे तानन्धतां प्राप्तान् प्राप्य व्यापादयामि ; ज्ञातं मया सम्यक्, नान्यथास्माकं सिद्धिरिति । यतो दुर्गमे तदपसाररहितं केवलं बधाय भविष्यति । उक्तञ्च,
यतः, अपसारसमायुक्तं नयज्ञैर्दुर्गमुच्यते ।
अपसारपरित्यक्तं दुर्गव्याजेन बन्धनं ॥ १२५ ॥

न च त्वया मदर्थं कृपा कार्य्या । उक्तञ्च,

अपि प्राणसमानिष्टान् पालितान् लालितानपि ।
भृत्यान् युद्धे समुत्पन्ने पश्येच्छुष्कमिवेन्धनं ॥ १२६ ॥

तथा च, प्राणवद्रक्षयेद्भृत्यान् स्वकायमिव पोषयेत्।
सदैकदिवसस्यार्थे यत्र स्याद्रिपुसङ्गमः॥ १२७॥

तत् त्वयाहं नात्रविषये प्रतिषेधनीयः। इत्युक्त्वा तेन सह शुष्ककलहं कर्त्तुमारब्धः। अथान्ये तस्य भृत्याः स्थिरजीविनमुच्चैःकृतवचनैर्जल्पन्तमवलोक्य तस्य बधायोद्यता मेघवर्णेनाभिहिताः। अहो! निवर्त्तध्वं यूयम्। अहमेवास्य शत्रुपक्षपातिनो दुरात्मनः स्वयं निग्रहं करिष्यामि। इत्यभिधाय तस्योपरि समारुह्य, लघुभिश्चञ्चुप्रहारैस्तं प्रहृत्य, आहतरुधिरेण प्लावयित्वा, तदुपदिष्टं ऋष्यमूकपर्व्वतं सपरिवारो गतः। एतस्मिन्नन्तरे कृकालिकया द्विषत्प्रणिधीभूतया तत् सर्व्वं मेघवर्णस्यामात्यस्य व्यसनमुलूकराज्ञो निवेदितम्। यत् तवारिः सम्प्रति भीतः क्वचित् प्रचलितः सपरिवार इति। अथोलूकाधिपस्तदाकर्ण्यास्तमनवेलायां सामात्यः सपरिजनो वायसवधार्थं प्रचलितः। प्राह च, त्वर्य्यताम् त्वर्य्यताम्। भीतः शत्रुः पलायनपरः पुण्यैर्लभ्यते। उक्तञ्च, शत्रोः प्रचलने छिद्रमेकमन्यच्च संश्रयम्।
कुर्व्वाणो जायते वश्यो व्यग्रत्वे राजसेविनाम्॥१२८॥

एवं ब्रुवाणः समन्तात् न्यग्रोधपादपमधः परिवेष्ट्य व्यवस्थितः। यावन्न कश्चिद्वायसो दृश्यते। तावच्छाखाग्रमधिरूढो हृष्टमना वन्दिभिरभिष्टूयमानोऽरिमर्द्दनः स्वान् परिजनान् प्रोवाच। अहो! ज्ञायतां तेषां मार्गः। कतमेन मार्गेण

प्रनष्टाः काकाः । तद्यावन्न दुर्गं समाश्रयन्ति, तावदेव पृष्ठतो गत्वा व्यापादयामि । उक्तञ्च,

वृतिमध्याश्रितः शत्रुरवध्य स्याज्जिगीषुणा ।
किं पुनः संश्रितो दुर्गं सामग्र्या परया युतम् ॥१२९॥

अथैतस्मिन् प्रस्तावे स्थिरजीवी चिन्तयामास । यत् एतेऽस्मच्छत्रवोऽनुपलब्धास्मद्वृत्तान्ता यथागतमेव यान्ति । ततो मया न किञ्चित् कृतं भवति । उक्तञ्च,

अनारम्भो हि कार्य्याणां प्रथमं बुद्धिलक्षणम् ।
प्रारब्धस्यान्तगमनं द्वितीयं बुद्धिलक्षणम् ॥ १३० ॥

तद्वरमनारम्भो न चारम्भविघातः । तदहमेतान् शब्दं संश्राव्यात्मानं दर्शयामीति विचार्य्य मन्दं मन्दं शब्दमकरोत् । तच्छ्रुत्वा ते सर्व्वाला अप्युलूकास्तद्वधाय प्रजग्मुः । अथ तेनोक्तं, अहो । अहं स्थिरजीवी नाम मेघवर्णस्य मन्त्री । मेघवर्णेनैवेदृशीमवस्थां नीतः । तन्निवेदयत आत्मस्वाम्यग्रे, तेन सह बहु वक्तव्यमस्ति । अथ तैर्निवेदितः स उलूकराजो विस्मयाविष्टस्तत्क्षणात् तस्य सकाशं गत्वा प्रोवाच । भो भोः ! किमेतां दशां गतस्त्वम् ? तत् कथ्यतां । स्थिरजीवी प्राह, देव ! श्रूयतां तदवस्थाकारणम् । अतीतदिने स दुरात्मा मेघवर्णो युष्मद्व्यापादितप्रभूतवायसानां पीड़या युष्माकमुपरि कोपशोकग्रस्तो युद्धार्थं प्रचलित आसीत् । ततो मयाभिहितं, स्वामिन् ! न युक्तं भवतस्तदुपरि गन्तुं, बलवन्त एते—बलहीनाश्च वयम् । उक्तञ्च,

बलीयसा हीनबलो विरोधं
न भूतिकामो मनसापि वाञ्छेत्।
न बध्यतेऽत्यन्तबलो हि यस्मात्
व्यक्तं प्रणाशोऽस्ति पतङ्गवृत्तेः॥ १३१॥

तत् तस्योपप्रदानेन सन्धिरेव युक्तः। उक्तञ्च,

बलवन्तं रिपुं दृष्ट्वा सर्व्वस्वमपि बुद्धिमान्।
दत्त्वा हि रक्षयेत् प्राणान् रक्षितैस्तैर्धनं पुनः॥१३२॥

तच्छ्रुत्वा तेन दुर्जनप्रकोपितेन त्वत्पक्षपातिनं मामाशङ्कमानेनेमान्दशां नीतः। तत् तव पादौ साम्प्रतमे स्मरणम्, किं बहुना विज्ञसेन। यावदहं प्रचलितुं शक्नोमि, तावत् त्वां तस्यावासे नीत्वा सर्व्ववायसक्षयं विधास्यामीति। अथारिमर्द्दनस्तदाकर्ण्य पितृपितामहक्रमागतमन्त्रिभिः सार्द्धं मन्त्रयाञ्चक्रे। तस्य च पञ्च मन्त्रिणः। तद्यथा रक्ताक्षः क्रूराक्षो दीप्ताक्षो वक्रनासः प्राकारकर्णश्चेति। तत्रादौ रक्ताक्षमपृच्छत्। भद्र! एष तावत् तस्य रिपोर्मन्त्री मम हस्तगतः। तत् किं क्रियतामिति। रक्ताक्ष आह, देव। किमत्र चिन्त्यते? अविचारितमयं हन्तव्यः।

यतः, हीनः शत्रुर्निहन्तव्यो यावन्न बलवान् भवेत्।
प्राप्तस्वपौरुषबलः पश्चाद्भवति दुर्जयः॥ १३३॥

किञ्च स्वयमुपागता श्रीस्त्यज्यमाना शपतीति लोके प्रवादः। उक्तञ्च,

कालो हि सकृदभ्येति यन्नरं कालकाङ्क्षिणम्।

दुर्लभः स पुनस्तेन कालकर्मचिकीर्षता ॥ १३४ ॥
श्रूयते च यथा,
चितिकां दीपितां पश्य फटां भग्नां ममैव च।
भिन्नश्लिष्टा तु या प्रीतिर्न सा स्नेहेन वर्द्धते ॥ १३५ ॥
अरिमर्दनः प्राह, कथमेतत्? रक्ताक्षः कथयति।

## कथा ५।

अस्ति कस्मिंश्चिदधिष्ठाने हरिदत्तो नाम ब्राह्मणः। तस्य च कृषिं कुर्वतः सदैव निष्फलः कालोऽतिवर्त्तते। अथैकस्मिन् दिवसे स ब्राह्मण उष्णकालावसाने घर्म्मार्त्तः स्वक्षेत्र मध्ये वृक्षच्छायायां प्रसुप्तः। अनतिदूरे वल्मीकोपरि प्रसारितं बृहत्फुटोपं भीषणं भुजङ्गमं दृष्ट्वा चिन्तयामास। नूनमेषा क्षेत्रदेवता मया कदाचिदपि न पूजिता। तेनेदं मे कृषिकर्म्म विफलीभवति। तदस्या अहं पूजामद्य करिष्यामीत्यवधार्य्य कुतोऽपि क्षीरं याचित्वा, शरावे निक्षिप्य। वल्मीकान्तिकमुपागम्योवाच। भो क्षेत्रपाल। मयैतावन्तं कालं न ज्ञातं यत् त्वमत्र वससि, तेन पूजा न कृता, तत् साम्प्रतं क्षमस्वेत्येवमुक्त्वा. दुग्धञ्च निवेद्य, गृहाभिमुखं प्रायात्। अथ प्रातर्यावदागत्य पश्यति, तावद्दीनारमेकं शरावे दृष्टवान्। एवं च प्रतिदिनमेकाकी समागत्य तस्मै क्षीरं ददाति, एकैकञ्च दीनारं गृह्णाति। अथैकस्मिन् दिवसे वल्मीके क्षीरनयनाय पुत्रं निरूप्य ब्राह्मणो ग्रामं

जगाम। पुत्रोऽपि क्षीरं तत्र नीत्वा संस्थाप्य च पुनर्गृहं समायातः। दिनान्तरे तत्र गत्वा दीनारमेकञ्च दृष्ट्वा गृहीत्वा च चिन्तितवान्। नूनं सौवर्णदीनारपूर्णोऽयं वल्मीकः। तदेनं हत्वा सर्वमेकवारं ग्रहीष्यामीत्येवं सम्प्रधार्यान्येद्युः क्षीरं ददता ब्राह्मणपुत्रेण सर्पो लगुडेन शिरसि ताड़ितः। ततः कथमपि दैववशादमुक्तजीवित एव रोषात् तमेव तीव्रविषदशनैस्तथादशत्, यथा सद्यः पञ्चत्वमुपागतः। स्वजनैश्च नातिदूरे क्षेत्रस्य काष्ठसञ्चयैः संस्कृतः। अथ द्वितीयदिने तस्य पिता समायातः। स्वजनेभ्यः सुतविनाशकारणं श्रुत्वा तथैव समर्थितवान्। अब्रवीच्च,

भूतान् यो नानुगृह्णाति ह्यात्मनः शरणागतान्।
भूतार्थास्तस्य नश्यन्ति हंसाः पद्मवने यथा॥ १३६॥

पुरुषैरुक्तं। कथमेतत्? ब्राह्मणः कथयति।

## कथा ६।

अस्ति कस्मिंश्चिदधिष्ठाने चित्ररथो नाम राजा। तस्य योधैः सुरक्ष्यमानं पद्मसरो नाम सरस्तिष्ठति। तत्र च प्रभूता जाम्बूनदमया हंसास्तिष्ठन्ति। षण्मासे षण्मासे पिच्छमेकैकं परित्यजन्ति। अथ तत्र सरसि सौवर्णो बृहत्पक्षी समायातः तैश्चोक्तः। अस्माकं मध्ये त्वया न वर्त्तव्यं। येन कारणेनास्माभिः षण्मासान्ते पिच्छैकैकदानं कृत्वा गृहीतमेतत् सरः। एवं च किं बहुना परस्परं द्वैधमुत्पन्नम्। स च राज्ञ-

शरणं गतो ऽब्रवीत्, देव ! एते पक्षिण एवं वदन्ति, यद-स्माकं राजा किं करिष्यति ? न कस्याप्यावासं दद्मः । मया चोक्तं, न शोभनं युष्माभिरभिहितम् । अहं गत्वा राज्ञे निवे-दयिष्यामि । एवं स्थिते देवः प्रमाणम् । ततो राजा भृत्यान-ब्रवीत्, भो भो ! गच्छत, सर्व्वान् पक्षिणो गतासून् कृत्वा शीघ्रमानयत । राजादेशानन्तरमेव प्रचेलुस्ते । अथ लगुड़-हस्तान् राजपुरुषान् दृष्ट्वा तत्रैकेन पक्षिणा वृद्धेनोक्तं, भोः स्वजना ! न शोभनमापतितम् । ततः सर्व्वैरेकमतीभूय शीघ्रमुत्पतितव्यं । तैश्च तथानुष्ठितं । अतोऽहं ब्रवीमि ।

भूतान् यो नानुगृह्णाति ह्यात्मनः शरणागतान् ।
भूतार्थास्तस्य नश्यन्ति हंसाः पद्मवने यथा ॥ १३७ ॥

इत्युक्त्वा पुनरपि ब्राह्मणः प्रत्यूषे क्षीरं गृहीत्वा, तत्र गत्वा तारस्वरेण सर्पमस्तौत् । तदा सर्पश्चिरं वल्मीकद्वारा-न्तर्लीन एव ब्राह्मणं प्रत्युवाच, त्वं लोभादत्रागतः पुत्र-शोकमपि विहाय । इतः परं तव मम च प्रीतिर्नोचिता । तवपुत्रेण यौवनोन्मदेनाहं ताड़ितः । मया स दष्टः । कथं मया लगुड़प्रहारो विस्मर्त्तव्यः ; त्वया च पुत्रशोकदुःखं कथं विस्मर्त्तव्यम् । इत्युक्त्वा बहुमूल्यं हीरकमणिं तस्मै दत्त्वा सूतः । पर पुनस्त्वया नागन्तव्यमिति पुनरुक्त्वा विवरान्तर्गतः । ब्राह्मणश्च मणिं गृहीत्वा पुत्रबुद्धिं निन्दन् स्वगृहमागतः । अतोऽहं ब्रवीमि ।

चितिका दीपिता पश्य फटा भग्ना ममैव च ।

भिन्नश्लिष्टा तु या प्रीतिर्न सा स्नेहेन वर्धते ॥ १३८ ॥

तदस्मिन् हते यत्नादेव राज्यमकण्टकं भवतो भवति। तस्यैतद्वचनं श्रुत्वा क्रूराक्षं पप्रच्छ, भद्र! त्वं तु किं मन्यसे? सोऽब्रवीत्, देव! निर्दयमेतत्, यदनेनाभिहितम्। यत्कारणं शरणागतो न वध्यते। सुष्ठु खल्विदमाख्यातम्।

श्रूयते हि कपोतेन शत्रुः शरणमागतः।
पूजितश्च यथान्यायं स्वैश्च मांसैर्निमन्त्रितः॥ १३९ ॥

परिमर्दनोऽब्रवीत्, कथमेतत्? क्रूराक्षः कथयति।

## कथा ७।

कश्चित् क्षुद्रसमाचारः प्राणिनां कालसन्निभः।
विचचार महारण्ये घोरः शकुनिलुब्धकः॥ १४० ॥
नैव कश्चित् सुहृत् तस्य न सम्बन्धी न बान्धवः।
स तैः सर्वैः परित्यक्तस्तेन रौद्रेण कर्मणा॥ १४१ ॥

अथवा, ये नृशंसा दुरात्मानः प्राणिनां प्राणनाशकाः।
उद्वेजनीया भूतानां व्याला इव भवन्ति ते॥ १४२ ॥
स पञ्जरकमादाय पाशं च लगुडं तथा।
नित्यमेव वनं याति सर्वप्राणिविहिंसकः॥ १४३ ॥
अन्येद्युर्भ्रमतस्तस्य वने कापि कपोतिका।
जाता हस्तगता तां स प्राक्षिपत् पञ्जरान्तरे॥ १४४॥
अथ कृष्णा दिशः सर्वा वनस्थस्याभवन् घनैः।
वातवृष्टिश्च महती क्षयकाल इवाभवत्॥ १४५ ॥

ततः सन्त्रस्तहृदयः कम्पमानो मुहुर्मुहुः।
अन्वेषयन् परित्राणमाससाद वनस्पतिम्॥ १४६॥
मुहूर्तं पश्यते यावद्वियद्विमलतारकम्।
प्राप्य वृक्षं वदत्येव योऽत्र तिष्ठति कश्चन॥ १४७॥
तस्याहं शरणं प्राप्तः स परित्रातु मामिति।
शीतेन भिद्यमानश्च क्षुधया गतचेतनः॥ १४८॥
अथ तस्य तरोः स्कन्धे कपोतः सुचिरोषितः।
भार्याविरहितस्तिष्ठन् विललाप सुदुःखितः॥ १४९॥
वातवर्षो महानासीन्न चागच्छति मे प्रिया।
तया विरहितं ह्येतच्छून्यमद्य गृहं मम॥ १५०॥
पतिव्रता पतिप्राणा पत्युः प्रियहिते रता।
यस्य स्यादीदृशी भार्या धन्यः स पुरुषो भुवि॥१५१॥
न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते।
गृहं हि गृहिणीहीनमरण्यसदृशं मतम्॥ १५२॥
पञ्जरस्था ततः श्रुत्वा भर्तुर्दुःखान्वितं वचः।
कपोतिका सुसन्तुष्टा वाक्यं चेदमथाह सा॥ १५३॥
न सा स्त्रीत्यभिमन्तव्या यस्यां भर्ता न तुष्यति।
तुष्टे भर्तरि नारीणां तुष्टाः स्युः सर्वदेवताः॥ १५४॥
दावाग्निना विदग्धेव सपुष्पस्तवकालता।
भस्मीभवतु सा नारी यस्यां भर्ता न तुष्यति॥ १५५॥
मितं ददाति हि पिता मितं भ्राता मितं सुतः।
अमितस्य हि दातारं भर्तारं का न पूजयेत्॥ १५६॥

पुनश्चाब्रवीत्,

शृणुष्वावहितं कान्त ! यत् ते वक्ष्याम्यहं हितम् ।
प्राणैरपि त्वया नित्यं संरक्ष्यः शरणागतः ॥ १५७ ॥
एष शाकुनिकः शेते तवावासं समाश्रितः ।
शीतार्त्तश्च क्षुधार्त्तश्च पूजामस्मै समाचर ॥ १५८ ॥
श्रूयते च, यः सायमतिथिं प्राप्तं यथाशक्ति न पूजयेत् ।
तस्यासौ दुष्कृतं दत्त्वा सुकृतं चापकर्षति ॥ १५९ ॥
मा चास्मै त्वं कृथा द्वेषं बद्धानेनेति मत्प्रिया ।
स्वकृतैरेव बद्धाहं प्राक्तनकर्म्मबन्धनैः ॥ १६० ॥
दारिद्र्यरोगदुःखानि बन्धनव्यसनानि च ।
आत्मापराधवृक्षस्य फलान्येतानि देहिनाम् ॥ १६१ ॥
तस्मात् त्वं द्वेषमुत्सृज्य मद्बन्धनसमुद्भवम् ।
धर्म्मे मनः समाधाय पूजयैनं यथाविधि ॥ १६२ ॥
तस्या स्तद्वचनं श्रुत्वा धर्म्मयुक्तिसमन्वितम् ।
उपगम्य ततोऽधृष्टः कपोतः प्राह लुब्धकम् ॥ १६३ ॥
भद्र ! सुस्वागतं तेऽस्तु ब्रूहि किं करवाणि ते ।
सन्तापश्च न कर्त्तव्यः स्वगृहे वर्त्तते भवान् ॥ १६४ ॥
तस्य तद्वचनं श्रुत्वा प्रत्युवाच विहङ्गमम् ।
कपोत ! खलु शीतं मे हिमत्राणं विधीयताम् ॥ १६५ ॥
स गत्वाङ्गारकं नीत्वा पातयामास पावकम् ।
ततः शुष्केषु पर्णेषु तमाशु समदीपयत् ॥ १६६ ॥
सुसन्दीप्तं ततः कृत्वा तमाह शरणागतम् ।

प्रतापयस्व विस्रब्धं स्वगात्राण्यत्र निर्भयः ।
न चास्ति विभवः कश्चिन्नाशये येन ते क्षुधम् ॥ १६७ ॥
सहस्रं भरते कश्चिच्छतमन्यो दशापरः ।
मम त्वकृतपुण्यस्य क्षुद्रस्यात्मापि दुर्भरः ॥ १६८ ॥
एकस्याप्यतिथेरन्नं यः प्रदातुं न शक्तिमान् ।
तस्यानेकपरिक्लेशे गृहे किं वसतः फलम् ? ॥ १६९ ॥
तत् तथा साधयाम्येतच्छरीरं दुःखजीवितम् ।
यथा भूयो न वक्ष्यामि नास्तीत्यर्थिसमागमे ॥ १७० ॥
स निनिन्द किलात्मानं न तु तं लुब्धकं पुनः ।
उवाच तर्पयिष्ये त्वां मुहूर्त्तं प्रतिपालय ॥ १७१ ॥
एवमुक्त्वा स धर्मात्मा प्रहृष्टेनान्तरात्मना ।
तमग्निं सम्परिक्रम्य प्रविवेश स्ववेश्मवत् ॥ १७२ ॥
ततस्तं लुब्धको दृष्ट्वा कृपया पीडितो भृशम् ।
कपोतमग्नौ पतितं वाक्यमेतदभाषत ॥ १७३ ॥
यः करोति नरः पापं न तस्यात्मा ध्रुवं प्रियः ।
आत्मना हि कृतं पापमात्मनैव हि भुज्यते ॥ १७४ ॥
सोऽहं पापमतिश्चैव पापकर्मरतः सदा ।
पतिष्यामि महाघोरे नरके नात्र संशयः ॥ १७५ ॥
नूनं मम नृशंसस्य प्रत्यादर्शः सुदर्शितः ।
प्रयच्छता स्वमांसानि कपोतेन महात्मना ॥ १७६ ॥
अद्य प्रभृति देहं स्वं सर्वभोगविवर्जितम् ।
तोयं स्वल्पं यथा ग्रीष्मे शोषयिष्याम्यहं पुनः ॥ १७७ ॥

शीतवातातपसहः कृशाङ्गो मलिनस्तथा ।
उपवासैर्बहुविधैरथ धर्ममुत्तमम् ॥ १७८ ॥
ततो यष्टिं शलाकाश्च जालकं पञ्जरं तथा ।
बभञ्ज लुब्धको दीनां कपोतीश्च मुमोच तां ॥ १७९ ॥
लुब्धकेन ततो मुक्ता दृष्ट्वाग्नौ पतितं पतिम् ।
कपोती विललापार्ता शोकसन्तप्तमानसा ॥ १८० ॥
न कार्यमद्य मे नाथ ! जीवितेन त्वया विना ।
दीनायाः पतिहीनायाः किं नार्या जीविते फलम्?॥१८१॥
मनोदर्पस्त्वहङ्कारः कुलपूजा च बन्धुषु ।
दासभृत्यजनेष्वाज्ञा वैधव्येन प्रणश्यति ॥ १८२ ॥
एवं विलप्य बहुशः कृपणं भृशदुःखिता ।
पतिव्रता सुसन्दीप्तं तमेवाग्निं विवेश सा ॥ १८३ ॥
ततो दिव्याम्बरधरा दिव्याभरणभूषिता ।
भर्तारं सा विमानस्थं ददर्श स्वं कपोतिका ॥ १८४ ॥
सोऽपि दिव्यतनुर्भूत्वा यथार्थमिदमब्रवीत् ।
अहो ! मामनुगच्छन्त्या कृतं साधु शुभे ! त्वया ॥ १८५ ॥
तिस्रः कोट्योऽर्धकोटी च यानि रोमाणि मानुषे ।
तावत् कालं वसेत् स्वर्गे भर्तारं यानुगच्छति ॥ १८६ ॥
कपोतदेवः सूर्यास्तमत्यहं सुखमन्वभूत् ।
सा स्वं सौरं कपोतस्य प्राक्पुण्यप्रभवं हि तत् ॥ १८७ ॥
हर्षाविष्टस्ततो व्याधो विवेश स वनं घनम् ।
प्राणिहिंसां परित्यज्य बहुनिर्वेदवान् भृशम् ॥ १८८ ॥

तत्र दावानलं दृष्ट्वा विवेश विरताशयः।
निर्दग्धकल्मषो भूत्वा स्वर्गसौख्यमवाप्तवान् ॥ १८८ ॥
अतोऽहं ब्रवीमि, श्रूयते हि कपोतेन शत्रुः शरणमागतः।
पूजितश्च यथान्यायं स्वैश्च मांसैर्निमन्त्रितः ॥ १९० ॥
तच्छ्रुत्वा अरिमर्दनो दीप्ताक्षं पृष्टवान्। एवमवस्थिते किं भवान् मन्यते? सोऽब्रवीत्, देव! न हन्तव्य एवायम्। यतः, या ममोद्विजते नित्यं सा मामद्यावगूहते।
प्रियकारक! भद्रन्ते यन्ममास्ति हरस्व तत् ॥ १९१ ॥
चौरेण चाप्युक्तम्।
हर्त्तव्यं ते न पश्यामि हर्त्तव्यं चेद्भविष्यति।
पुनरप्यागमिष्यामि यदीयं नावगूहते ॥ १९२ ॥
अरिमर्दनः पृष्टवान्, का च नावगूहते। कथायं चौरः विस्तरतः श्रोतुमिच्छामि। दीप्ताक्षः कथयति।

## कथा ८।

अस्ति कस्मिंश्चिदधिष्ठाने कामातुरो नाम वृद्धवणिक्, तेन च कामोपहतचेतसा मृतभार्य्येण काचिन्निर्धनवणिक्सुता प्रभूतं धनं दत्त्वोद्वाहिता। अथ सा दुःखाभिभूता तं वृद्धवणिजं द्रष्टुमपि न शशाक। युक्तञ्चैतत्।

श्वेतं पदं शिरसि यत्तु शिरोरुहाणाम्
स्थानं परं परिभवस्य तदेव पुंसाम्।
आरोपितास्थिशकलं परिहृत्य यान्ति

चाण्डालकूपमिव दूरतरं तरुण्यः ॥ १८३ ॥

तथा च, गात्रं सङ्कुचितं गतिर्विगलिता दन्ताश्च नाशं गता,
दृष्टिर्भ्राम्यति रूपमप्युपहतं वक्त्रञ्च लालायते।
वाक्यं नैव करोति बान्धवजनः पत्नी न शुश्रूषते
धिक् कष्टं जरयाभिभूतपुरुषं पुत्त्रोऽप्यवज्ञायते ॥ १८४ ॥

अथ कदाचित् सा तेन सहैकशयने पराङ्मुखी यावत् तिष्ठति, तावद्गृहे चोरः प्रविष्टः। सापि तं चोरं दृष्ट्वा भयव्याकुलिता वृद्धमपि तं पतिं गाढ़ं समालिलिङ्ग। सोऽपि विस्मयात् पुलकाञ्चितसर्व्वगात्रश्चिन्तयामास। अहो! किमेषा मामद्यावगूहते। यावन्निपुणतया पश्यति, तावद्गृहकोणैकदेशे चोरं दृष्ट्वा व्यचिन्तयत्। नूनमेषास्य भयान्मामालिङ्गतीति ज्ञात्वा तं चोरमाह,

या ममोद्विजते नित्यं सा मामद्यावगूहते।
प्रियकारक! भद्रन्ते यन्ममास्ति हरस्व तत् ॥ १८५ ॥

तच्छ्रुत्वा चोरोऽप्याह,

हर्त्तव्यं ते न पश्यामि हर्त्तव्यं चेद्भविष्यति।
पुनरप्यागमिष्यामि यदीयं नावगूहते ॥ १८६ ॥

तस्माच्चोरस्याप्युपकारिणः श्रेयश्चिन्त्यते; किं पुनर्न शरणागतस्य। अपि चायं तैर्विप्रकृतोऽस्माकमेव पुष्टये भविष्यति तदीयरन्ध्रदर्शनाय चेति। अनेन कारणेनायमवध्य इति। एतदाकर्ण्यारिमर्दनोऽन्यं सचिवं वक्रनासं पप्रच्छ, भद्र! साम्प्रतमेव स्थिते किं कर्त्तव्यं; सोऽब्रवीत्, देव! अवध्योऽयम्।

यतः, शत्रवोऽपि हितायैव विवदन्तः परस्परम् ।
चौरेण जीवितं दत्तं राक्षसेण तु गोयुगम् ॥ १८७ ॥

अरिमर्दनः प्राह, कथमेतत्? वक्रनासः कथयति ।

## कथा ८ ।

अस्ति कस्मिंश्चिदधिष्ठाने दरिद्रो द्रोणनामा ब्राह्मणः प्रतिग्रहधनः सततं विशिष्टवस्त्रानुलेपनगन्धमाल्यालङ्कारताम्बूलादिभोगपरिवर्जितः प्ररूढकेशश्मश्रुनखरोमोपचितः शीतोष्णवातवर्षादिभिः परिशोषितशरीरः । तस्य च केनापि यजमानेनानुकम्पया शिशुगोयुगं दत्तम् । ब्राह्मणेन च बालभावादारभ्य याचितघृततैलयवसादिभिः संवर्ध्य सुपुष्टं कृतम् । तच्च दृष्ट्वा सहसैव कश्चिच्चौरश्चिन्तितवान्, अहमस्य ब्राह्मणस्य गोयुगमिदमपहरिष्यामि । इति निश्चित्य निशायां बन्धनपाशं गृहीत्वा यावत् प्रस्थितः, तावदर्द्धमार्गे प्रविरलतीक्ष्णदन्तपङ्क्तिरुन्नतनासावंशो प्रकटरक्तान्तनयनोपचितस्नायुसन्ततिर्नतगात्रः शुष्ककपोलः सुहुतहुतवहपिङ्गश्मश्रुकेशशरीरः कश्चिद्दृष्टः । दृष्ट्वा च तं तीव्रभयत्रस्तोऽपि चौरोऽब्रवीत्, को भवानिति? स आह, सत्यवचनोऽहं ब्रह्मराक्षसः । भवानप्यात्मानं निवेदयतु । सोऽब्रवीत्, अहं क्रूरकर्मा चौरः । दरिद्रब्राह्मणस्य गोयुगं हर्त्तुं प्रस्थितोऽस्मि । अथ जातप्रत्ययो राक्षसोऽब्रवीत्, भद्र! षष्ठाङ्गकालिकोऽहं; अतस्तमेव ब्राह्मणमद्य भक्षयिष्यामि । तत्

सुन्दरमिदं, एककार्यावेवावाम्। अथ तौ तत्र गत्वैकान्ते कालमन्वेषयन्तौ स्थितौ। प्रसुप्ते च ब्राह्मणे तद्भक्षणार्थं प्रस्थितं राक्षसं दृष्ट्वा चौरोऽब्रवीत्, भद्र। नैष न्यायः; यतो गोयुगे मयापहृते पश्चात् त्वमेनं ब्राह्मणं भक्षय। सोऽब्रवीत्, कदाचिदयं ब्राह्मणो गोशब्देन बुध्येत, तदानर्थकोऽयं, ममारम्भः स्यात्। चौरोऽप्यब्रवीत्, तवापि यदि भक्षणायोपस्थितस्यान्तर एकोऽप्यन्तरायः स्यात्। तदाहमपि न शक्नोमि गोयुगमपहर्तुम्। अतः प्रथमं मयापहृते गोयुगे पश्चात् त्वया ब्राह्मणो भक्षयितव्यः। इत्थं चाहमहमिकया तयोर्विवदतोः समुत्पन्ने द्वैधे प्रतिरवशाद्ब्राह्मणो जजागार। अथ तं चौरोऽब्रवीत्, ब्राह्मण! त्वामेवायं राक्षसो भक्षयितुमिच्छति। राक्षसोऽप्याह, ब्राह्मण। चौरोऽयं, गोयुगन्तेऽपहर्तुमिच्छति। एवं श्रुत्वोत्थाय ब्राह्मणः सावधानो भूत्वेष्टदेवतामन्त्राध्यायेनात्मानं राक्षसादुद्गूर्णलगुडेन चौराद्गोयुगं ररक्ष। अतोऽहं ब्रवीमि,

शत्रवोऽपि हितायैव विवदन्तः परस्परम्।
चौरेण जीवितं दत्तं राक्षसेन तु गोयुगम्॥ १८८॥

अथ तस्य वचनमवधार्यारिमर्दनः पुनरपि प्राकारकर्णं संपृच्छत्, कथय किमत्र मन्यते भवान्। सोऽब्रवीत्, देव! अवध्य एवायं, यतो रक्षितेनानेन कदाचित् परस्परप्रीत्या कालः सुखेन गच्छति। उक्तञ्च,

परस्परस्य मर्माणि ये न रक्षन्ति जन्तवः।

त एव निधनं यान्ति वल्मीकोदरसर्पवत् ॥ १८८ ॥
अरिमर्दनोऽब्रवीत्, कथमेतत् ? प्राकारकर्णः कथयति ।

## कथा १० ।

अस्ति कस्मिंश्चिन्नगरे देवशक्तिर्नाम राजा, तस्य च पुत्रो जठरवल्मीकाश्रयेणोरगेण प्रतिदिनं प्रत्यङ्गं चीयते । अनेकोपचारैः सद्वैद्यैः सच्छास्त्रोपदिष्टौषधयुक्त्यापि चिकित्स्यमानो न स्वास्थ्यमाप्नोति । अथासौ राजपुत्रो निर्वेदाद्देशान्तरं गतः । कस्मिंश्चिन्नगरे भिक्षाटनं कृत्वा महति देवालये कालं यापयति । अथ तत्र नगरे बलिर्नाम राजास्ते, तस्य च द्वे दुहितरौ यौवनस्थे तिष्ठतः । ते च प्रतिदिवसमादित्योदये पितुः पादान्तिकमागत्य नमस्कारं चक्रतुः । तत्रैकाब्रवीत्, विजयस्व महाराज । यस्य प्रदानात् सर्वं सुखं लभ्यते । द्वितीया तु विहितं भुङ्क्ष्व महाराज ! इति ब्रवीति । तच्छ्रुत्वा प्रकुपितो राजाब्रवीत्, भो मन्त्रिण ! एनां दुष्टभाषिणीं कुमारिकां कस्यचिद्वैदेशिकस्य प्रयच्छत । येन निजविहितमियमेव भुङ्क्ते । अथ तथेति प्रतिपद्याल्पपरिवारा सा कुमारिका मन्त्रिभिस्तस्य देवकुलाश्रितराजपुत्रस्य प्रतिपादिता । सापि प्रहृष्टमानसा तं पतिं देववत् प्रतिपद्यादाय चान्यविषयं गता । ततः कस्मिंश्चिद्दूरतरनगरप्रदेशे तडागतटे राजपुत्रमावासरक्षायै निरूप्य, स्वयं

च घृततैललवणतण्डुलादिक्रयनिमित्तं सपरिवारा गता। कृत्वा च क्रयविक्रयं यावदागच्छति, तावत् स राजपुत्रो वल्मीकोपरिकृतमूर्धा प्रसुप्तः। तस्य च मुखाद्भुजगः फणां निष्क्रम्य वायुमश्नाति। तत्रैव च वल्मीकेऽपरः सर्पो निष्क्रम्य तथैवासीत्। अथ तयोः परस्परदर्शनेन क्रोधसंरक्तलोचनयोर्मध्याद्वल्मीकस्थेन सर्पेणोक्तं, भो भो दुरात्मन्! कथं सुन्दरसर्वाङ्गं राजपुत्रमित्थं कदर्थयसि? मुखस्थोऽहिरब्रवीत्, भो भो। त्वयापि दुरात्मनास्य वल्मीकस्य मध्ये कथमिदं दूषितं हाटकपूर्णं कलशयुगलमित्येवं परस्परस्य मर्माण्युद्घाटितवन्तौ पुनर्वल्मीकस्थोऽहिरब्रवीत्। भो दुरात्मन्। भेषजमिदं ते किं कोऽपि न जानाति? यज्जीर्णोत्कालितकाञ्जिकाराजिकापानेन भवान् विनाशमुपयाति अथोदरस्थोऽहिरब्रवीत्। तवाप्येतद्भेषजं किं कश्चिदपि न वेत्ति? यदुष्णतैलेन वा महोष्णोदकेन तव विनाशः स्यादिति। एवञ्च सा राजकन्या विटपान्तरिता तयोः परस्परालापान् मर्ममयानाकर्ण्य तथैवानुष्ठितवती। विधायाव्यङ्गं नीरोगं भर्तारं निधिञ्च परममासाद्य स्वदेशाभिमुखं प्रायात्। पितृमातृस्वजनैः प्रतिपूजिता विहितोपभोगं प्राप्य सुखेनावस्थिता अतोऽहं ब्रवीमि।

परस्परस्य मर्माणि ये न रक्षन्ति जन्तवः।
त एव निधनं यान्ति वल्मीकोदरसर्पवत् ॥ २०० ॥

तच्च श्रुत्वा स्वयमरिमर्दनोऽप्येवं समर्थितवान्। तथा

चानुष्ठितं दृष्ट्वान्तर्लीनं विहस्य रक्ताक्षः पुनरब्रवीत्, कष्टं कष्टं ! विनाशितोऽयं भवद्भिरन्यायेन स्वामी । उक्तञ्च,

अपूज्या यत्र पूज्यन्ते पूज्यानान्तु विमानता ।
त्रीणि तत्र प्रवर्त्तन्ते दुर्भिक्षं मरणं भयम् ॥ २०१ ॥

तथा च । प्रत्यक्षेऽपि कृते पापे मूर्खः साम्ना प्रशाम्यति ।
रथकारः स्वकां भार्य्यां सजारां शिरसावहत् ॥ २०२ ॥

मन्त्रिणः प्राहुः । कथमेतत् ? रक्ताक्षः कथयति,

## कथा ११ ।

अस्ति कस्मिंश्चिदधिष्ठाने वीरधरो नाम रथकारः, तस्य भार्य्या कामदमिनी । सा च पुंश्चली जनापवादसंयुक्ता च । सोऽपि तस्याः परीक्षणार्थं व्यचिन्तयत्, कथं मयास्याः परीक्षणं कर्त्तव्यम् । उक्तञ्च यतः ।

यदि स्यात् पावकः शीतः प्रोष्णो वा शशलाञ्छनः ।
स्त्रीणां तदा सतीत्वं स्याद्यदि स्यात् दुर्ज्जनो हितः ॥२०३॥

जानामि चैनां लोकवचनादसतीम् । उक्तञ्च,

यच्च वेदेषु शास्त्रेषु न दृष्टं न च संश्रुतम् ।
तत् सर्वं वेत्ति लोकोऽयम् यत् स्याद्ब्रह्माण्डमध्यगम्॥२०४॥

एवं सम्प्रधार्य्य भार्य्यामवोचत्, प्रिये । प्रभातेऽहं ग्रामान्तरं यास्यामि । तत्र कतिचिद्दिनानि लगिष्यन्ति । तत् त्वया किमपि पाथेयं मम योग्यं विधेयम् । सापि तद्वचन

श्रुत्वा हर्षितचित्ता सोत्सुका सर्व्वकार्य्याणि सन्त्यज्य सिद्ध-मत्रं घृतशर्करापायमकरोत् । अथवा साध्विदमुच्यते,

दुर्दिवसे घनतिमिरे वर्षति जलदे महाटवीप्रभृतौ ।
पत्युर्विदेशगमने परमसुखं जघनचपलायाः ॥ २०५ ॥

अथासौ प्रत्यूष उत्थाय स्वगृहान्निर्गतः । सापि तं प्रस्थितं विज्ञाय प्रहसितवदनाङ्गसंस्कारं कुर्व्वाणा कथ-ञ्चित् तद्दिनमत्यवाहयत् । अथ पूर्व्वपरिचितविटगृहे गत्वा तं प्रत्युक्तवती । स दुरात्मा मे पतिर्ग्रामान्तरं गतः ; तत् त्वयास्मद्गृहे प्रसुप्ते जने समागन्तव्यम् । तथानुष्ठिते स रथ-कारोऽरण्ये दिनमतिवाह्य प्रदोषे स्वगृहेऽपरद्वारेण प्रविश्य शय्याधस्तले निभृतो भूत्वा स्थितः । एतस्मिन्नन्तरे स देव-दत्तः समागत्य तत्र शयन उपविष्टः । तं दृष्ट्वा रोषाविष्टचित्तो रथकारो व्यचिन्तयत्, किमेनमुत्थाय हन्मि, अथवा हेलयैव प्रसुप्तौ द्वावप्येतौ व्यापादयामि । परं पश्यामि तावदस्याश्चेष्टि-तम् । शृणोमि चानेन सहालापान् । अत्रान्तरे सा गृहद्वारं निभृतं विधाय शयनतलमारूढ़ा । अथ तस्यास्तत्रारोहन्त्या रथकारशरीरे पादो विलग्नः । ततः सा व्यचिन्तयत्, नून-मेतेन दुरात्मना रथकारेण मत्परीक्षणार्थं भाव्यम् । ततः स्त्रीचरितविज्ञानं किमपि करोमि । एवं तस्याश्चिन्तयन्त्याः स देवदत्तः स्पर्शोत्सुको बभूव । अथ तया कृताञ्जलिपुट-याभिहितम् । भो महानुभाव ! न मे शरीरं त्वया स्पर्श-नीयं, यतोऽहं पतिव्रता महासती च । नो चेच्छाप

दत्त्वा त्वां भक्षसात् करिष्यामि। स आह, यद्येवं तर्हि त्वया किमहमाहूतः? साब्रवीत्, भोः! शृणुष्वैकाग्रमनाः। अहमद्य प्रत्यूषे देवतादर्शनार्थं चण्डिकायतनं गता, तत्राकस्मात् खे वाणी सञ्जाता। पुत्रि! किं करोमि, भक्तासि मे त्वं, परं षण्मासाभ्यन्तरे विधिनियोगाद्विधवा भविष्यसि। ततो मयाभिहितं भगवति! यथा त्वमापदं वेत्सि, तथा तत्प्रतीकारमपि जानासि। तदस्ति कश्चिदुपायो येन मे पतिः शतसंवत्सरजीवी भवति। ततस्तयाभिहितम्। वत्से! सन्नपि नास्ति, यतस्त्वदायत्तः स प्रतीकारः, तच्छ्रुत्वा मयाभिहितम्, देवि! यदि तन्मम प्राणैर्भवति, तदादेशय येन करोमि। अथ देव्याभिहितम्, यद्यद्दिने परपुरुषेण सहैकस्मिन् शयने समारुह्यालिङ्गनं करोषि, तत् तव भर्तृसक्तोऽपमृत्युस्तस्य संचरति; भर्त्तापि पुनर्वर्षशतं जीवति। तेन त्वं मयाभ्यर्थितः। तदास् किञ्चित् कर्त्तुमनास्तत् कुरुष्व। न हि देवतावचनमन्यथा भविष्यतीति निश्चयः, ततोऽन्तर्हासविकाशमुखः स तदुचितमाचचार।- सोऽपि रथकारी मूर्खस्तस्यास्तद्वचनमाकर्ण्य पुलकाङ्कितततनुः शय्याधस्तलान्निष्क्रम्य तामुवाच, साधु पतिव्रते! साधु कुलनन्दिनि! अहं दुर्जनवचनशङ्कितहृदयस्त्वत्परीक्षानिमित्तं ग्रामान्तरव्याजं कृत्वात्र खट्वाधस्तले निभृतं लीनः। तदेह्यालिङ्गय मां, त्वं स्वभर्तृभक्तानां मुख्या नारीणां यदेव, ब्रह्मव्रतं परसङ्गेऽपि पालितवती। मदायुर्वृद्धिकृतेऽपमृत्युविनाशार्थञ्च त्वमेवं कृत-

सती। तामेवमुक्का सस्नेहमालिङ्गितवान्। स्वस्कन्धे तामारोप्य तमपि देवदत्तमुवाच, भो महानुभाव! मत्पुण्यैस्त्वमिहागतः, त्वत्प्रसादान्मया प्राप्तं वर्षशतप्रमाणमायुः। तत् त्वमपि मामालिङ्ग्य मत्स्कन्धे समारोह। इति जल्पन् अनिच्छन्तमपि देवदत्तमालिङ्ग्य बलात् स्वकीयस्कन्धे आरोपितवान्। ततश्च नृत्यं कृत्वा, हे ब्रह्मव्रतधराणां धुरीण! त्वयापिमय्युपकृतमित्याद्युक्का स्कन्धादुत्तार्य्य, यत्र यत्र स्वजनगृहद्वारादिषु बभ्राम, तत्र तत्र तयोरुभयोरपि तद्गुणवर्णनमेव करोति। अतोऽहं ब्रवीमि,

प्रत्यक्षेऽपि कृते पापे मूर्खः साम्ना प्रशाम्यति।
रथकारः स्वकां भार्य्यां सजारां शिरसावहत्॥ २०६॥

तत् सर्व्वथा मूलोत्खाता वयं विनष्टाः स्मः। सुष्ठु खल्विदमुच्यते,

मित्ररूपा हि रिपवः सम्भाव्यन्ते विचक्षणैः।
ये हितं वाक्यमुत्सृज्य विपरीतोपसेविनः॥ २०७॥

तथा च, सन्तोऽप्यर्था विनश्यन्ति देशकालविरोधिनः।
अप्राज्ञान् मन्त्रिणः प्राप्य तमः सूर्य्योदये यथा॥ २०८॥

ततस्तद्वचोऽनादृत्य सर्व्वे ते स्थिरजीविनमुत्क्षिप्य स्वदुर्गमानेतुमारब्धाः। अथानीयमानः स्थिरजीव्याह, देव! अद्याकिञ्चित्करेणैतदवस्थेन किं मयोपसंगृहीतेन; सत्कारणमिच्छामि दीप्तं वह्निमनुवेष्टुम्। तदर्हसि मामग्निप्रदानेन समुद्धर्त्तुम्। अथ रक्ताक्षस्तस्यान्तर्गतभावं ज्ञात्वाब्रवीत्,

किमर्थमग्निपतनमिच्छसि। सोऽब्रवीत्, अहं तावद्युष्मदर्थं इमामापदं मेघवर्णेन प्रापितः। तदिच्छामि तेषां वैरयातनार्थमुलूकत्वमिति। तच्च श्रुत्वा राजनीतिकुशलो रक्ताक्षः प्राह, भद्र! कुटिलस्त्वं कृतकवचनचतुरश्च। तत् त्वमुलूकयोनिगतोऽपि स्वकीयामेव वायसयोनिं बहुमन्यसे। श्रूयते चैतदाख्यानकम्।

सूर्यं भर्त्तारमुत्सृज्य पर्जन्यं मारुतं गिरिम्।
स्वजातिं मूषिका प्राप्ता स्वजातिर्दुरतिक्रमा ॥२०८॥

मन्त्रिणः प्रोचुः, कथमेतत्? रक्ताक्षः कथयति।

## कथा १२।

अस्ति विषमशिलातलस्खलिताम्बुनिर्घोषश्रवणसन्त्रस्तमत्स्यपरिवर्त्तनसञ्जनितश्वेतफेनशबलतरङ्गाया गङ्गायास्तटे जपनियमतपःस्वाध्यायोपवासयोगक्रियानुष्ठानपरायणैः परिपूतपरिमितजलजिघृक्षुभिः कन्दमूलफलशैवलाभ्यवहारकदर्थितशरीरैर्वल्कलकृतकौपीनमात्रप्रच्छादनैस्तपस्विभिराकीर्णमाश्रमपदम्। तत्र याज्ञवल्क्यो नाम कुलपतिः, तस्य जाह्नव्यां स्नात्वोपस्प्रष्टुमारब्धस्य करतले श्येनमुखात् परिभ्रष्टा मूषिका पतिता। तां दृष्ट्वा न्यग्रोधपत्रेऽवस्थाप्य, पुनः स्नात्वोपस्पृश्य च, प्रायश्चित्तादिक्रियां कृत्वा च, मूषिकां तां स्वतपोबलेन कन्यकां कृत्वा समादाय स्वाश्रममाजिगाय। अनपत्यांश्च जायामाह, भद्रे। गृह्यतामियं तव दुहितोत्पन्ना प्रयत्नेन

संवर्द्धनीयेति। ततस्तया संवर्द्धिता लालिता पालिता च यावत् द्वादशवर्षा सञ्जाता। अथ विवाहयोग्यां तां दृष्ट्वा भर्त्तारमेव जायोवाच, भो भर्त्तः! किमिदं नावबुध्यसे यथास्याः स्वदुहितुर्विवाहसमयातिक्रमो भवति, असावाह, साधूक्तम्। उक्तञ्च,

स्त्रियः पूर्व्वं सुरैर्भुक्ताः सोमगन्धर्ववह्निभिः।
भुञ्जते मानुषाः पश्चात् तस्माद्दोषो न विद्यते॥ २१०॥
सोमस्तासां ददौ शौचं गन्धर्व्वाः शिक्षितां गिरम्।
पावकः सर्व्वमेध्यत्वं तस्मान्निष्कल्मषाः स्त्रियः॥ २११॥
असम्प्राप्तरजा गौरी प्राप्ते रजसि रोहिणी।
अव्यञ्जना भवेत् कन्या कुचहीना च नग्निका॥२१२॥
व्यञ्जनैस्तु समुत्पन्नैः सोमो भुङ्क्ते हि कन्यकाम्।
पयोधराभ्यां गन्धर्व्वा रजस्यग्निः प्रतिष्ठितः॥ २१३॥
तस्माद्विवाहयेत् कन्यां यावन्नर्तुमती भवेत्।
विवाहस्त्वष्टवर्षायाः कन्यायास्तु प्रशस्यते॥ २१४॥
व्यञ्जनं हन्ति वै पूर्व्वं परं चैव पयोधरौ।
रतिरिष्टांस्तथा लोकान् हन्याच्च पितरं रजः॥ २१५॥
ऋतुमत्यां तु तिष्ठन्त्यां स्वेच्छादानं तु दीयते।
तस्मादुद्वाहयेन्नग्नां मनुः स्वायम्भुवोऽब्रवीत्॥ २१६॥
पितृवेश्मनि या कन्या रजः पश्यत्यसंस्कृता।
अविवाह्यातु सा कन्या जघन्या वृषली स्मृता॥ २१७॥
श्रेष्ठेभ्यः सदृशेभ्यश्च जघन्येभ्यो रजस्वला।

पित्रा देया विनिश्चित्य यतो दोषो न विद्यते ॥ २१८ ॥

अतोऽहमेनां सद्भाय प्रयच्छामि नान्यस्मै । उक्तञ्च,

ययोरेव समं वित्तं ययोरेव समं कुलम् ।
तयोर्विवाहः सख्यं च न तु पुष्टविपुष्टयोः ॥ २१९॥

तथाच, कुलञ्च शीलञ्च सनाथता च
विद्या च वित्तञ्च वपुर्वयश्च ।
एतान् गुणान् सप्त विचिन्त्य देया
कन्या बुधैः शेषमचिन्तनीयम् ॥ २२० ॥

तद्यद्यस्या रोचते तदा भगवन्तमादित्यमाहूय तस्मै प्रयच्छामि । सा प्राह, इह को दोषः ? क्रियतामेतत् । अथ मुनिना रविराहूतः । वेदमन्त्रामन्त्रणप्रभावात् तत्क्षणादेवाभ्युपगम्यादित्यः प्रोवाच, भगवन् ! किमहमाहूतः ? सोऽब्रवीत्, एषा मदीया कन्यका तिष्ठति । यद्येषा त्वां वृणोति तदुद्वहस्वेति । एवमुक्त्वा स्वदुहितरमुवाच, पुत्रि ! किं तव रोचत एष भगवान् त्रैलोक्यदीपको भानुः । पुत्रिकाब्रवीत्, तात ! अतिदहनात्मकोऽयम् । नाहमेनमभिलषामि । तदस्मादन्यः प्रकृष्टतरः कश्चिदाहूयताम् । अथ तस्यास्तद्वचनं श्रुत्वा मुनिर्भास्करमुवाच, भगवन् ! त्वदधिकोऽस्ति कश्चित् ? भास्करः प्राह, अस्ति मदप्यधिको मेघो येनाच्छादितोऽहमदृश्यो भवामि । अथ मुनिना मेघमप्याहूय कन्याभिहिता, पुत्रिके ! अस्मै त्वां प्रयच्छामि । सा प्राह, कृष्णवर्णोऽयं जडात्मा च । तदस्मादन्यस्य प्रधानस्य कस्य-

चिम्मां प्रयच्छ। अथ मुनिना मेघोऽपि पृष्टः। भो भो मेघ! त्वदप्यधिकोऽस्ति कश्चित्? मेघेनोक्तं, मत्तोऽप्यधिकोऽस्ति वायुः। वायुना हतोऽहं सहस्रधा यामि। तच्छ्रुत्वा मुनिना वायुराहूतः। आह च, पुत्रिके! एष वायुस्ते विवाहायोत्तमः प्रतिभाति, साब्रवीत्। तात! अतिचपलोऽयं तदस्मादप्यधिकः कश्चिदानीयताम्। मुनिराह, वायो! त्वत्तोऽप्यधिकोऽस्ति कश्चित्? पवनेनोक्तं,। मत्तोऽप्यधिकोऽस्ति पर्व्वतो येन संस्तभ्य बलवानप्यहं ध्रियै। अथ मुनिः पर्व्वतमाहूय कन्यामुवाच। पुत्रिके! त्वामस्मै प्रयच्छामि। सा प्राह, तात! कठिनात्मकोऽयं स्तब्धश्च! तदन्यस्मै देहि मां; मुनिना पर्वतः पृष्टः। भो पर्वतराज! त्वदप्यधिकोऽस्ति कश्चित्, गिरिणोक्तं। मत्तोऽप्यधिकाः सन्ति मूषिका ये मच्छरीरं बलाद्विदारयन्ति। ततो मुनिर्मूषिकमाहूय तस्या अदर्शयत्। आह च, पुत्रिके! त्वामस्मै प्रयच्छामि। एष प्रतिभाति ते मूषराजः। सापि तं दृष्ट्वा स्वजातीय एष इति मन्यमाना पुलकोद्भूषितशरीरोवाच। तात! मां मूषिकां कृत्वास्मै प्रयच्छ। येन स्वजातिविहितं गृहधर्म्ममनुतिष्ठामि। ततः सोऽपि स्वतपोबलेन तां मूषिकां कृत्वास्मै प्रादात्। अतोऽहं ब्रवीमि।

सूर्य्यं भर्त्तारमुत्सृज्य पर्य्यन्यं मारुतं गिरिम्।
स्वजातिं मूषिका प्राप्ता स्वजातिर्दुरतिक्रमा॥ २२१॥

अथ रक्ताक्षवचनमनादृत्य तैः स्ववंशविनाशाय म

स्वदुर्गमुपनीतः । नीयमानश्चान्तर्लीनमवहस्य स्थिरजीवी व्यचिन्तयत् ।

हन्यतामिति येनोक्तं स्वामिनो हितवादिना ।
स एवैकोऽत्र सर्वेषां नीतिशास्त्रार्थतत्त्ववित् ॥ २२२ ॥

तद्यदि तस्य वचनमकरिष्यन्नेते, ततो न स्वल्पोऽप्यनर्थोऽभविष्यदेतेषाम् । अथ दुर्गद्वारं प्राप्यारिमर्दनोऽब्रवीत्, भो ! भो ! हितैषिणोऽस्य स्थिरजीविनो यथासमीहितं स्थानं प्रयच्छत ; तच्च श्रुत्वा स्थिरजीवी व्यचिन्तयत्, मया तावदेतेषां वधोपायश्चिन्तनीयः, स मया मध्यस्थेन न साध्यते । यतो मदीयमिङ्गितादिकं विचारयन्तस्तेऽपि सावधाना भविष्यन्ति, तद्दुर्गमधिश्रितोऽभिप्रेतं साधयामि । इति निश्चित्योलूकपतिमाह, देव ! युक्तमिदं यत् स्वामिना प्रोक्तं, परमहमपि नीतिज्ञस्तेहितश्च । यद्यप्यनुरक्तः शुचिस्तथापि दुर्गमध्य आवासो नार्हः । तदहमत्रैव दुर्गद्वारस्थः प्रत्यहं भवत्पादपद्मरजःपवित्रीकृततनुः सेवां करिष्यामि । तथेति प्रतिपन्ने प्रतिदिनमुलूकपतिसेवकास्ते प्रकाममाहारं कृत्वा उलूकराजादेशात् प्रकृष्टमांसाहारं स्थिरजीविने प्रयच्छन्ति । अथ कतिपयैरेवाहोभिर्मयूर इव स बलवान् सम्वृत्तः । अथ रक्ताक्षः स्थिरजीविनं पोष्यमाणं दृष्ट्वा सविस्मयो मन्त्रिजनं राजानञ्च प्रत्याह । अहो ! मूर्खोऽयं मन्त्रिजनो भवांश्च । इत्येवमहमवगच्छामि । उक्तञ्च,

पूर्वं तावदहं मूर्खो द्वितीयः पाशबन्धकः ।

ततो राजा च मन्त्री च सर्व्वं वै मूर्खमण्डलम् ॥२२३॥
ते प्राहुः, कथमेतत् ? रक्ताचः कथयति.

## कथा १३।

अस्ति कस्मिंश्चित् पर्व्वतैकदेशे महान् वृत्तः। तत्र च सिन्धुकनामा कोऽपि पक्षी प्रतिवसति स्म। तस्य पुरीषे सुवर्णमुत्पद्यते। अथ कदाचित् तमुद्दिश्य व्याधः कोऽपि समाययौ। स च पक्षी तदग्रत एव पुरीषमुत्ससर्ज। अथ पातसमकालमेव तत् सुवर्णीभूतं दृष्ट्वा व्याधो विस्मयमगमत्। अहो! मम शिशुकालादारभ्य शकुनिबन्धव्यसनिनोऽशीतिवर्षाणि समभूवन्। न च कदाचिदपि पक्षिपुरीषे सुवर्णं दृष्टम्। इति विचिन्त्य तत्र वृक्षे पाशं बबन्ध। अथासावपि पक्षी मूर्खस्तत्रैव विश्वस्तचित्तो यथापूर्व्वमुपविष्टः। तत्कालमेव पाशेन बद्धः। व्याधस्तु तं पाशादुन्मुच्य पञ्जरके संस्थाप्य निजावासं नीतवान्। अथ चिन्तयामास, किमनेन सापायेन पक्षिणाहं करिष्यामि; यदि कदाचित् कोऽप्यमुमीदृशं ज्ञात्वा राज्ञे निवेदयिष्यति, तन्नूनं प्राणसंशयो मे भवेत्; अतः स्वयमेव पक्षिणं राज्ञे निवेदयामि। इति विचार्य तथैवानुष्ठितवान्। अथ राजापि तं पक्षिणं दृष्ट्वा विकसितनयनवदनकमलः परां तुष्टिमुपागतः, प्राह चैव, हंहो! रक्षापुरुषाः! एनं पक्षिणं यत्नेन रक्षत। अशनपानादिकं चास्य यथेच्छं प्रयच्छत। अथ मन्त्रिणाभिहितम्,

किमनेनाप्तदेयव्याधवचनप्रत्ययमात्रपरिगृहीतेनाण्डजेन ? किं कदाचित् पक्षिपुरीषे सुवर्णं सम्भवति ? तन्मुच्यतां पञ्जरबन्धनादयं पक्षी। इति मन्त्रिवचनाद्राज्ञा मोचितो ऽसौ पक्षी उन्नतद्वारतोरणे समुपविश्य सुवर्णमयीं विष्टां विधाय, पूर्व्वं तावदहं मूर्ख इति श्लोकं पठित्वा यथासुखमाकाशमार्गेण प्रायात्। अतोऽहं ब्रवीमि।

पूर्व्वं तावदहं मूर्खो द्वितीयः पापबन्धकः।
ततो राजा च मन्त्री च सर्व्वं वै मूर्खमण्डलम्॥ २२४॥

अथ ते पुनरपि प्रतिकूलदैवतया हितमपि रक्ताक्षवचनमनादृत्य भूयस्तं प्रभूतमांसादिविविधाहारेण पोषयामासुः। अथ रक्ताक्षः स्ववर्गमाहूय रहः प्रोवाच, अहो! एतावदेवास्मद्भूपतेः कुशलं दुर्गञ्च। तदुपदिष्टं मया यत् कुलक्रमागतः सचिवो ऽभिधत्ते। तद्वयमन्यत् पर्व्वतदुर्गं सम्प्रति समाश्रयामः। उक्तञ्च यतः,

अनागतं यः कुरुते स शोभते
स शोच्यते यो न करोत्यनागतम्।
वनेऽत्र संस्थस्य समागता जरा
बिलस्य वाणी न कदापि मे श्रुता॥ २२५॥

ते प्रोचुः, कथमेतत् ? रक्ताक्षः कथयति,

## कथा १४ ।

अस्ति कस्मिंश्चिद्वनोद्देशे खरनखरो नाम सिंहः प्रतिवसति स्म । स कदाचिदितश्चेतश्च परिभ्रमन् क्षुत्क्षामकण्ठो न किञ्चिदपि सत्त्वमाससाद । ततश्चास्तमनसमये महतीं गिरिगुहामासाद्य प्रविष्टश्चिन्तयामास । नूनमेतस्यां गुहायां रात्रौ केनापि सत्त्वेनागन्तव्यम् । तन्निभृतो भूत्वा तिष्ठामि । एतस्मिन्नन्तरे तत्स्वामी दधिपुच्छो नाम शृगालः समायातः ; स च यावत् पश्यति, तावत् सिंहपदपद्धतिर्गुहायां प्रविष्टा न च निःक्रामणं गता । ततश्चाचिन्तयत्, अहो ! विनष्टोऽस्मि । नूनमस्यामन्तर्गतेन सिंहेन भाव्यम् । तत् किं करोमि ? कथं ज्ञास्यामि ? एवं विचिन्त्य द्वारस्थः फूत्कर्तुमारब्धः अहो बिल ! अहो बिल ! इत्युक्त्वा तूष्णींभूय भूयोऽपि तथैव प्रत्यभाषत, भोः ! किं न स्मरसि यन्मया त्वया सह समयः कृतोऽस्ति । यन्मया बाह्यात् समागतेन त्वं वक्तव्यः । त्वया चाहमाकारणीय इति । तद्यदि मां नाह्वयसि ततोऽहं द्वितीयं बिलं यास्यामि । यत् पश्चान्मामाह्वास्यति । अथ तच्छ्रुत्वा सिंहश्चिन्तितवान् नूनमेषा गुहास्य समागतस्य सदा समाह्वानं करोति । परमद्य मद्भयान्न किञ्चिद्ब्रूते । अथवा साध्विदमुच्यते ।

भयसन्त्रस्तमनसां हस्तपादादिकाः क्रियाः ।
प्रवर्त्तन्ते न वाणीच वेपथुश्चाधिको भवेत् ॥ २२६ ॥

तदहमस्याह्वानं करोमि येन तदनुसारेण प्रविष्टोऽयं मे भोज्यतां याति। एवं सम्प्रधार्य सिंहस्तस्याह्वानमकरोत्। अथ सिंहशब्देन सा गुहा प्रतिरवसम्पूर्णान्यानपि दूरस्थान-रण्यजीवान् त्रासयामास। शृगालोऽपि पलायमान इमं श्लोकमपठत्।

अनागतं यः कुरुते स शोभते
स शोच्यते यो न करोत्यनागतम्।
वनेऽत्र संस्थस्य समागता जरा
बिलस्य वाणी न कदापि मे श्रुता॥ २२७॥

तदेवं मत्वा युष्माभिर्मया सह गन्तव्यमिति। एवमभि-धायात्मानुयायिपरिवारानुगतो दूरदेशान्तरं रक्ताक्षो जगाम।

अथ रक्ताक्षे गते स्थिरजीव्यतिहृष्टमना व्यचिन्तयत्, अहो। कल्याणमस्माकमुपस्थितं यद्रक्ताक्षो गतः। यतः स दीर्घदर्शी, एते च मूढमनसः। ततो मम सुखघात्याः सञ्जाताः, उक्तञ्च यतः।

न दीर्घदर्शिनो यस्य मन्त्रिणः स्युर्महीपतेः।
क्रमायाता ध्रुवं तस्य न चिरात् स्यात् परिक्षयः॥२२८॥

अथवा साध्विदमुच्यते,

मन्त्रिरूपा हि रिपवः सम्भाव्यन्ते विचक्षणैः।
ये सन्तं नयमुत्सृज्य सेवन्ते प्रतिलोमतः॥ २२८॥

एवं विचिन्त्य स्वकुलाय एकैकां वनकाष्ठिकां गुहादीप नार्थं दिने दिने प्रक्षिपति। न च ते मूर्खा उलूका विजा-

न्ति । यदेष कुलायमस्माहाहाय हृद्धिं नयति । अथवा साध्विदमुच्यते ।

अमित्रं कुरुते मित्रं मित्रं द्वेष्टि हिनस्ति च ।
शुभं वेत्यशुभं पापं भद्रं दैवहतो नरः ॥ २३० ॥

अथ कुलायव्याजेन दुर्गद्वारे कृते काष्ठनिचये सञ्जाते सूर्य्योदयेऽन्धतां प्राप्तेषूलकेषु सत्सु स्थिरजीवी शीघ्रं गत्वा मेघवर्णमाह, स्वामिन् । दाहसाध्या कृता रिपुगुहा । तत् सपरिवारः समेत्यैकैकां वनकाष्ठिकां ज्वलन्तीं गृहीत्वा गुहाद्वारेऽस्मत्कुलाये प्रक्षिप, येन सर्व्वे शत्रवः कुम्भीपाकनरकप्रायेण दुःखेन म्रियन्ते । तच्छ्रुत्वा प्रहृष्टो मेघवर्ण आह, तात ! कथयात्मवृत्तान्तम् । चिराद्य दृष्टोऽसि । स आह, वत्स ! नायं वक्तव्यस्य कालः । यतः कदाचित् तस्य रिपोः कश्चित्प्रणिधिर्ममेहागमनं निवेदयिष्यति । तज्ज्ञानादन्धोऽन्यत्रापसरणं करिष्यति । तत् त्वर्य्यताम् । उक्तञ्च,

शीघ्रकृत्येषु कार्य्येषु विलम्बयति यो नरः ।
तत् कृत्यं देवतास्तस्य कोपाद्विघ्नन्त्यसंशयम् ॥ २३१ ॥

तथा च, यस्य यस्य हि कार्य्यस्य फलितस्य विशेषतः ।
क्षिप्रमक्रियमाणस्य कालः पिबति तत्फलम् ॥ २३२ ॥

तद्गृहायातस्ते हतशत्रोः सर्वं सविस्तरं निर्व्याकुलतया कथयिष्यामि । अथासौ तद्वचनमाकर्ण्य सपरिजन एकैकां ज्वलन्तीं वनकाष्ठिकां चञ्च्वग्रेण गृहीत्वा तद्गुहाद्वारं प्राप्य स्थिरजीविकुलाये प्राक्षिपत् । ततः सर्व्वे ते दिवान्धा रक्ता-

च्चवाक्यानि स्मरन्तो द्वारस्थावतत्वादनिःसरन्तो गुहामध्ये कुम्भीपाकन्यायमापन्ना मृताश्च। एवं शत्रून् निःशेषतां नीत्वा भूयोऽपि मेघवर्णस्तदैव न्यग्रोधपादपदुर्गं जगाम। ततः सिंहासनस्थो भूत्वा सभामध्ये प्रमुदितमनाः स्थिरजीविनमपृच्छत्, तात! कथं त्वया शत्रुमध्ये गतेनैतावत् कालो नीतः? तदत्र कौतुकमस्माकं वर्त्तते। तत् कथ्यताम्, यतः,

वरमग्नौ प्रदीप्ते तु प्रपातः पुण्यकर्म्मणाम्।
न चारिजनसंसर्गो मुहूर्त्तमपि सेवितः॥ २३३॥

तदाकर्ण्य स्थिरजीव्याह, भद्र! आगामिफलवाञ्छया कष्टमपि सेवको न जानाति। उक्तञ्च यतः,

उपनतभयैर्यो यो मार्गो हितार्थकरो भवेत्
स स निपुणया बुद्ध्या सेव्यो महान् कृपणोऽपि वा।
करिकरनिभौ ज्याघाताङ्कौ महार्थविशारदौ
रचितवलयैः स्त्रीवद्बद्धौ करौ हि किरीटिना॥ २३४॥
शक्तेनापि सदा नरेन्द्रविदुषा कालान्तरापेक्षिणा
वास्तव्यं खलु वाक्यवज्रविषमे क्षुद्रेऽपि पापे जने।
दर्वीव्यग्रकरेण धूममलिनेनायासयुक्तेन च
भीमेनातिबलेन मत्स्यभवने किं नोषितं सूदवत्॥ २३५॥
यद्वा तद्वा विषमपतितं साधु वा गर्हितं वा
कालापेक्षी हृदयनिहितं बुद्धिमान् कर्म्म कुर्य्यात्।
किं गाण्डीवस्फुरगुरुघनास्फालनक्रूरपाणि-
र्नासील्लीलानटनविलसन् मेखली सव्यसाची॥ २३६॥

सिद्धिं प्रार्थयता जनेन विदुषा तेजो निगृह्य स्वकम्
सत्त्वोत्साहवतापि दैवविधिषु स्थैर्यं प्रकार्यं क्रमात्।
देवेन्द्रद्रविणेश्वरान्तकसमैरप्यन्वितो भ्रातृभिः ।
किं क्लिष्टः सुचिरं त्रिदण्डमवहच्छ्रीमान्न धर्म्मात्मजः॥२३७॥
रूपाभिजनसम्पन्नौ कुन्तीपुत्रौ बलान्वितौ।
गोकर्म्मरक्षाव्यापारे विराटप्रेष्यतां गतौ ॥ २३८ ॥
रूपेणाप्रतिमेन यौवनगुणैः श्रेष्ठे कुले जन्मना
कान्त्या श्रीरिव यात्र सापि विदशां कालक्रमादागता।
सैरिन्ध्रीति सगर्वितं युवतिभिः साक्षेपमाज्ञातया।
द्रौपद्या ननु मत्स्यराजभवने घृष्टं न किं चन्दनम् ॥२३९॥

मेघवर्ण आह, तात। असिधाराव्रतमिदं मन्ये यद्-रिणा सह संवासः। सोऽब्रवीत्, देव! एवमेतत्। परं न तादृग्मूर्खसमागमः क्वापि मया दृष्टः। न च महाप्रज्ञमनेकशास्त्रेष्वप्रतिमबुद्धिं रक्ताक्षं विना धीमान्। यत्कारणं तेन मदीयं यथावस्थितं चित्तं ज्ञातम्। ये पुनरन्ये मन्त्रिणस्ते महामूर्खा मन्त्रिमात्रव्यपदेशोपजीविनोऽतत्त्वकुशला यैरिदमपि न ज्ञातम्। यतः,

अरितोऽभ्यागतो भृत्यो दुष्टस्तत्सङ्गतत्परः।
अपसर्प्यः स धर्म्मत्वान्नित्योद्वेगी च दूषितः॥ २४० ॥
आसने शयने याने पानभोजनवस्तुषु।
दृष्टादृष्टप्रमत्तेषु प्रहरन्त्यरयोऽरिषु ॥ २४१ ॥
तस्मात् सर्व्वप्रयत्नेन त्रिवर्गनिलयं बुधः।

आत्मानमादृतो रक्षेत् प्रमादाद्धि विनश्यति ॥ २४२ ॥

साधु चेदमुच्यते,

सन्तापयन्ति कमपथ्यभुजं न रोगाः ?
दुर्मन्त्रिणं कमुपयान्ति न नीतिदोषाः ?
कं श्रीर्न दर्पयति ? कं न निहन्ति मृत्युः ?
कं स्त्रीकृता न विषयाः परिपीडयन्ति ? ॥ २४३ ॥

लुब्धस्य नश्यति यशः पिशुनस्य मैत्री
नष्टक्रियस्य कुलमर्थपरस्य धर्मः ।
विद्याफलं व्यसनिनः कृपणस्य सौख्यम्
राज्यं प्रमत्तसचिवस्य नराधिपस्य ॥ २४४ ॥

तद्राजन् । असिधाराव्रतं मयाचरितमरिसंसर्गादिति, यद्भवतोक्तं तन्मया साक्षादेवानुभूतम् । उक्तञ्च,

अपमानं पुरस्कृत्य मानं कृत्वा तु पृष्ठतः ।
स्वार्थमभ्युद्धरेत् प्राज्ञः स्वार्थभ्रंशो हि मूर्खता ॥२४५॥

स्कन्धेनापि वहेच्छत्रुं कालमासाद्य बुद्धिमान् ।
महता कृष्णसर्पेण मण्डूका बहवो हताः ॥ २४६ ॥

मेघवर्ण आह, कथमेतत् ? स्थिरजीवी कथयति,

## कथा १५ ।

अस्ति वरुणाद्रिसमीपे एकस्मिन् प्रदेशे परिणतवया मन्दविषो नाम कृष्णसर्पः, स एवं चित्ते सञ्चिन्तितवान्, कथं नाम मया सुखोपायवृत्त्या वर्त्तितव्यमिति, ततो बहुमण्डूक ह्रद-

मुपगम्य धृतिपरीतमिवात्मानं दर्शितवान्। अथ तथा स्थिते तस्मिन्नुदकप्रान्तगतेनैकेन मण्डूकेन पृष्टः, माम। किमद्य यथापूर्वमाहारार्थं न विहरसि? सोऽब्रवीत्, भद्र। कुतो मे मन्दभाग्यस्याहाराभिलाषः। यत्कारणमद्य रात्रौ प्रदोष एव मयाहारार्थं विहरमाणेन दृष्ट एको मण्डूकः। तद्ग्रहणार्थं मया क्रमः सज्जितः। सोऽपि मां दृष्ट्वा मृत्युभयेन स्वाध्यायप्रसक्तानां ब्राह्मणानामन्तरमपक्रान्तो न विभावितो मया क्वापि गतः। तत्सदृशमोहितचित्तेन मया कस्यचिद्ब्राह्मणस्य सूनोर्ह्रदतटजलान्तःस्थोऽङ्गुष्ठो दष्टः। ततोऽसौ सपदि पञ्चत्वमुपागतः। अथ तस्य पित्रा दुःखितेनाहं शप्तः, यथा दुरात्मन्। त्वया निरपराधो मत्सुतो दष्टः; तदनेन दोषेण त्वं मण्डूकानां वाहनं भविष्यसि, तत्प्रसादलब्धजीविकया वर्तिष्यस इति। ततोऽहं युष्माकं वाहनार्थमागतः। तेन च सर्वमण्डूकानामिदमावेदितम्। ततस्तैः प्रहृष्टमनोभिः सर्वैरेव गत्वा जलपादनाम्नो दर्दुरराजस्य विज्ञप्तम्। अथासावपि मन्त्रिपरिवृतोऽत्यद्भुतमिदमिति मन्यमानः ससम्भ्रमं ह्रदादुत्तीर्य मन्दविषस्य फणिनः फणप्रदेशमधिरूढः। शेषा अपि यथाज्येष्ठं तत्पृष्ठोपरि समारुरुहुः। किं बहुना तदुपरि स्थानमप्राप्नुवन्तस्तस्यानुपदं धावन्ति। मन्दविषोऽप्यात्मतुष्ट्यर्थमनेकप्रकारगतिविशेषानदर्शयत्। अथ जलपादो लब्धतदङ्गसंस्पर्शसुखस्तमाह,

न तथा करिणा यानं तुरगेण रथेन वा।

नरयानेन वा यानं यथा मन्दविषेण मे ॥ २४७ ॥

अथान्येद्युर्मन्दविषश्छद्मना मन्दं मन्दं विसर्पति। तच्च दृष्ट्वा जलपादोऽब्रवीत्, भद्र मन्दविष। यथापूर्वं किमद्य साधु नोह्यते ? मन्दविषोऽब्रवीत्, देव। अद्याहारवैकल्यान्न मे वोढुं शक्तिरस्ति। अथासाब्रवीत्, भद्र। भक्षय क्षुद्रमण्डूकान्। तच्छ्रुत्वा प्रहर्षितसर्वगात्रो मन्दविषः ससम्भ्रममब्रवीत्, ममायमेव विप्रशापोऽस्ति। तत् तवानेनानुज्ञावचनेन प्रीणितोऽस्मि। ततोऽसौ नैरन्तर्येण मण्डूकान् भक्षयन् कतिपयैरेवाहोभिर्बलवान् संवृत्तः। प्रहृष्टयान्तर्लीनमवहस्येदमब्रवीत्,

मण्डूका विविधा ह्येते छलपूर्व्वोपसाधिताः।
कियन्तं कालमक्षीणा भवेयुः खादिता मम ॥ २४८ ॥

जलपादोऽपि मन्दविषेण कृतकवचनव्यामोहितचित्तः किमपि नावबुध्यते। अत्रान्तरेऽन्यो महाकायः कृष्णसर्पस्तमुद्देशं समायातः। तञ्च मण्डूकैर्वाह्यमानं दृष्ट्वा विस्मयमगमत्, आह च, वयस्य। यदस्माकमशनं तैर्वाह्यसे। विरुद्धमेतत्। मन्दविषोऽब्रवीत्,

सर्वमेतद्विजानामि यथा वाह्योऽस्मि दर्दुरैः।
किञ्चित् कालं प्रतीक्ष्योऽहं घृतान्धो ब्राह्मणो यथा ॥२४९॥

सोऽब्रवीत्, कथमेतत् ? मन्दविषः कथयति,

## कथा १६ ।

अस्ति कस्मिंश्चिदधिष्ठाने यज्ञदत्तो नाम ब्राह्मणः, तस्य भार्य्या पुंश्चल्यन्यासक्तमना अजस्रं विटाय सखण्डघृतान् घृतपूरान् कृत्वा भर्त्तुश्चौरिकया प्रयच्छति।

अथ कदाचिद्भर्त्ता दृष्टोक्ता च, भद्रे! किमेतत् परिपच्यते? कुत्र चाजस्रं नयसीदं? कथय सत्यं, सा चोत्पन्नप्रतिभा कृतकवचनैर्भर्त्तारमब्रवीत्, अस्त्यत्र नातिदूरे भगवत्या देव्या आयतनम्; तत्राहमुपोषिता सती बलिं भक्ष्यविशेषांश्चापूर्व्वान् नयामि। अथ तस्य पश्यतो गृहीत्वा तत् सकलं देव्यायतनाभिमुखी प्रतस्थे। यत्कारणं देव्या निवेदितेनानेन मदीयो भर्त्तैवं मंस्यते। यन्मम ब्राह्मणी भगवत्याः कृते भक्ष्यविशेषान् नित्यमेव नयतीति। अथ देव्यायतने गत्वा स्नानार्थं नद्यामवतीर्य्य यावत् स्नानक्रियां करोति, तावद्भर्त्तान्यमार्गान्तरेणागत्य देव्याः पृष्ठतोऽदृश्योऽवतस्थे। अथ सा ब्राह्मणी स्नात्वा देव्यायतनमागत्य स्नानानुलेपनमाल्यधूपबलिक्रियादिकं कृत्वा देवीं प्रणम्य व्यजिज्ञपत्। भगवति! केन प्रकारेण मम भर्त्तान्धो भविष्यति? तच्छ्रुत्वा स्वरभेदेन देवीपृष्ठस्थितो ब्राह्मणो जगाद, यदि त्वमजस्रं घृतपूरादिभक्ष्यं तस्मै भर्त्रे प्रयच्छसि। ततः शीघ्रमन्धो भविष्यति। सा तु बन्धकी कृतकवचनवञ्चितमानसा तस्मै ब्राह्मणाय तदेव नित्यं प्रददौ। अथान्येद्युर्ब्राह्मणे-

नाभिहितं, भद्रे! नाहं सुतरां पश्यामि। तच्छ्रुत्वा चिन्तितमनया, देव्या प्रसादोऽयं प्राप्त इति। अथ तस्या हृदयवल्लभो विटस्तत्सकाशमन्धोभूतोऽयं ब्राह्मणः किं मम करिष्यतीति निःशङ्कः प्रतिदिनमभ्येति अथान्येद्युस्तं प्रविशन्तमभ्यासगतं दृष्ट्वा केशेष्वृहीत्वा लगुड़पार्ष्णिप्रभृतिप्रहारैस्तावदताड़यत्। यावदसौ पञ्चत्वमाप, तामपि दुष्टपत्नीं छिन्ननासिकां कृत्वा विससर्ज। अतोऽहं ब्रवीमि।

सर्व्वमेतद्विजानामि यथा वाह्योऽस्मि दर्दुरैः।
किञ्चित् कालं प्रतीच्योऽहं हतान्धो ब्राह्मणो यथा॥२५०॥

अथ मन्दविषोऽन्तर्लीनमयहस्य पुनरपि मण्डूका विविधास्वादा इति तदेवाब्रवीत्। अथ जलपादस्तच्छ्रुत्वा सुतरां व्यग्रहृदयः किमनेनाभिहितमिति तमपृच्छत्, भद्र! किं त्वयाभिहितम्? इदं विरुद्धं वचः। अथासावाकारप्रच्छादनार्थं न किञ्चिदित्यब्रवीत्। तथैव कृतकवचनव्यामोहितचित्तो जलपादस्तस्य दुष्टाभिसन्धिं नावबुध्यते। किं बहुना, तथा तेन सर्व्वेऽपि भक्षिता यथा बीजमात्रमपि नावशिष्टं। अतोऽहं ब्रवीमि,

स्कन्धेनापि वहेच्छत्रुं कालमासाद्य बुद्धिमान्।
महता कृष्णसर्पेण मण्डुका बहवो हताः॥२५१॥

अथ राजन्! यथा मन्दविषेण बुद्धिबलेन मण्डूका निहताः। तथा मयापि सर्व्वेऽपि वैरिण इति। साधु चेदमुच्यते;

वने प्रज्वलितो वह्निर्दहन् मूलानि रक्षति ।
समूलोन्मूलनं कुर्य्याद्वायुर्यो मृदुशीतलः ॥ २५२

मेघवर्ण आह, तात ! सत्यमेवैतत् । ये महात्मानो भवन्ति ते महासत्त्वा आपद्गता अपि प्रारब्धं न सजन्ति, उक्तञ्च यतः,

महत्त्वमेतन्महतां नयालङ्कारधारिणाम् ।
न मुञ्चन्ति यदारब्धं कृच्छ्रेऽपि व्यसनोदये ॥ २५३ ॥

तथाच, प्रारभ्यते न खलु विघ्नभयेन नीचैः
प्रारभ्य विघ्नविहिता विरमन्ति मध्याः ।
विघ्नैः सहस्रगुणितैरपि हन्यमानाः
प्रारब्धमुत्तमगुणा न परित्यजन्ति ॥ २५४ ॥

तत् कृतं निष्कण्टकं मम राज्यं शत्रून् निःशेषतां नयता त्वया ; अथवा युक्तमेतन्नयवेदिनां । उक्तञ्च यतः,

ऋणशेषं चाग्निशेषं शत्रुशेषं तथैव च, ।
व्याधिशेषञ्च निःशेषं कृत्वा प्राज्ञो न सीदति ॥ २५५ ॥

सोऽब्रवीत्, देव ! भाग्यवांस्त्वमेवासि यस्यारब्धं सर्व्वमेव संसिध्यति, तन्न केवलं शौर्य्यं कृत्यं साधयति, किन्तु प्रज्ञया यत् क्रियते तदेव विजयाय भवति । उक्तञ्च,

शस्त्रैर्हता न हि हता रिपवो भवन्ति
प्रज्ञाहतास्तु रिपवः सुहता भवन्ति ।
शस्त्रं निहन्ति पुरुषस्य शरीरमेकम् ।
प्रज्ञा कुलञ्च विभवञ्च यशश्च हन्ति ॥ २५६ ।

तदेवं प्रज्ञापुरुषकाराभ्यां युक्तस्यायत्नेन कार्यसिद्धयः सम्भवन्ति ।

प्रसरति मतिः कार्यारम्भे दृढी भवति स्मृतिः
स्वयमुपनयन्नर्थान् मन्त्रो न गच्छति विप्लवं ।
स्फुरति सफलस्तर्कश्चित्तं समुन्नतिमश्नुते
भवति च रतिः श्लाघ्ये कृत्ये नरस्य भविष्यतः ॥ २५७ ॥

तथाच, नयत्यागशौर्यसम्पन्ने पुरुषे राज्यमिति, उक्तञ्च,

त्यागिनि शूरे विदुषि च संसर्गरुचिर्जनो गुणी भवति ।
गुणवति धनं धनाच्छ्रीः श्रीमत्याज्ञा ततो राज्यम् ॥ २५८ ॥

मेघवर्ण आह, नूनं सद्यःफलानि नीतिशास्त्राणि यत् त्वयानुकूल्ये नानुप्रविश्यारिमर्दनः सपरिजनो निःशेषितः, स्थिरजीव्याह,

तीक्ष्णोपायप्राप्तिगम्योऽपि योऽर्थ
स्तस्याप्यादौ संश्रयः साधुयुक्तः ।
उत्तुङ्गाग्रः सारभूतो वनानाम्
नाम्नाभ्यर्च्यञ्छिद्यते पादपेन्द्रः ॥ २५९ ॥

अथवा स्वामिन् ! किं तेनाभिहितेन यदनन्तरकाले क्रियारहितमसुखसाध्यं वा भवति । साधु चेदमुच्यते,

अनिश्चितैरध्यवसायभीरुभि.
पदे पदे दोषशतानुदर्शिभि ।
फलैर्विसंवादमुपागता गिरः
प्रयान्ति लोके परिहासवस्तताम् ॥ २६० ॥

न च लघुष्वपि कर्त्तव्येषु धीमद्भिरनादर. कार्य्यः । यत ,

शक्यामि कर्तुमिदमल्पमयत्नसाध्यम्
अत्रादरः क इति कृत्यमुपेक्षमाणाः ।
केचित् प्रमत्तमनसः परितापदुःखम्
आपत्प्रसङ्गसुलभं पुरुषाः प्रयान्ति ॥ २६१ ॥

तदद्य जितारिर्मद्विभोर्यथापूर्वं निद्रालाभो भविष्यति, उच्यते चैतत् ।

*निःसर्पे बद्धसर्पे वा भवने सुप्यते सुखम् ।*
सदा दृष्टभुजङ्गे तु निद्रा दुःखेन लभ्यते ॥ २६२ ॥

तथा च, विस्तीर्णव्यवसायसाध्यमहतां स्निग्धोपभुक्ताशिषाम्
कार्याणां नयसाहसोन्नतिमतामिच्छापदारोहिणाम् ।
मानोत्सेकपराक्रमव्यसनिनः पारं न यावद्गताः
सामर्षे हृदयेऽवकाशविषयाः तावत् कथं निर्वृतिः ॥ २६३ ॥

तदवसितकार्यारम्भस्य विश्राम्यतीव मे हृदयम्। तदिदमधुना निहतकण्टकं राज्यं प्रजापालनतत्परो भूत्वा पुत्रपौत्रादिक्रमेणाचलछत्रासनश्रीश्चिरं भुंक्ष्व, अपि च।

प्रजा न रञ्जयेद्यस्तु राजा रक्षादिभिर्गुणैः ।
अजागलस्तनस्येव तस्य राज्यं निरर्थकम् ॥ २६४ ॥

*गुणेषु रागो व्यसनेष्वनादरो*
रतिः सुभृत्येषु च यस्य भूपतेः ।
चिरं स भुङ्क्ते चलचामरांशुकाम्
*सितातपत्राभरणां नृपश्रियम् ॥ २६५ ॥*

न च त्वया मांप्रत्ज्ञोऽहमिति मत्वा श्रीमदेनात्मा

ध्वंसयितव्यः, यत्कारणं चला हि राज्ञो विभूतयः। वंशारोहणवद्राज्यलक्ष्मीर्दुरारोहा, क्षणविनिपातरता, प्रयत्नशतैरपि धार्य्यमाणा दुर्धरा, प्रशस्ताराधिताप्यन्ते विप्रलम्भिनी, वानरजातिरिव विद्रुतानेकचित्ता, पद्मपत्रोदकमिवाघटितसंश्लेषा, पवनगतिरिवातिचपला, अनार्य्यसङ्गतमिवास्थिरा, आशीविष इव दुरुपचारा, सन्ध्याभ्रलेखेव मुहूर्त्तरागा, जलबुद्बुदालीव स्वभावभङ्गुरा, शरीरप्रकृतिरिव कृतघ्ना। स्वप्नलब्धद्रव्यराशिरिव क्षणदृष्टनष्टा। अपि च,

यदैव राज्ये क्रियतेऽभिषेकस्तदैव बुद्धिर्व्यसनेषु योज्या।
घटा हि राज्ञामभिषेककाले सहाम्भसैवापदमुद्गिरन्ति॥२६६॥

न च कश्चिदनधिगमनीयो नामास्त्यापदाम्। उक्तञ्च,

रामस्य व्रजनं बलेर्नियमनं पाण्डोः सुतानां वनम्
वृष्णीनां निधनं नलस्य नृपते राज्यात् परिभ्रंशनम्।
नाट्याचार्य्यकमर्जुनस्य पतनं सञ्चिन्त्य लङ्केश्वरे
सर्वं कालवशाज्जनोऽत्र सहते कः कं परित्रायते॥२६७॥

क्व स दशरथः स्वर्गं भूत्वा महेन्द्रसुहृद्गतः
क्व स जलनिधेर्वेलां बध्वा नृपः सगरस्तथा।
क्व स करतलाज्जातो वैण्यः क्व सूर्य्यतनुर्मनुः
ननु बलवता कालेनैते प्रबध्य निमीलिताः॥२६८॥

मान्धाता क्व गतस्त्रिलोकविजयी राजा क्व सत्यव्रतः
देवानां नृपतिर्गतः क्व नहुषः सच्छास्त्रवान् केशवः।
मन्यन्ते सरथाः सकुञ्जरवराः शक्रासनाध्यासिनः

कालेनैव महात्मना त्वमुक्ता कालेन निर्वासिता:॥२६९॥

अपि च,

स च नृपतिस्ते सचिवास्ताः प्रमदास्तानि काननवनानि

स च ते च ताश्च तानि च कृतान्तदृष्टानि नष्टानि ॥२७०॥

एवं मत्तकरिकर्णचञ्चलां राज्यलक्ष्मीमवाप्य न्यायैकनिष्ठो भूत्वोपभुङ्क्ष्व ।

इति श्रीविष्णुशर्मविरचिते पञ्चतन्त्रके

काकोलूकीयं नाम तृतीयं तन्त्रं

समाप्तम् ।

अथेदमारभ्यते लब्धप्रणाशं नाम चतुर्थं तन्त्रं, यस्याय-मादिमः श्लोकः ।

समुत्पन्नेषु कार्य्येषु बुद्धिर्यस्य न हीयते ।
स एव दुर्गं तरति जलस्थो वानरो यथा ॥ १ ॥

तद्यथानुश्रूयते,

## कथा १ ।

अस्ति कस्मिंश्चित्समुद्रोपकण्ठे महान् जम्बूपादपः सदा फलः ; तत्र च रक्तमुखो नाम वानरः प्रतिवसति स्म । तत्र च तस्य तरोरधः कदाचित् करालमुखो नाम मकरः समुद्र सलिलान्निष्क्रम्य सुकोमलवालुकासनाथे तीरोपान्ते न्यविशत् । ततश्च रक्तमुखेन स प्रोक्तः, भो ! भवान् समभ्यागतोऽतिथिः । तद्भक्षयतु मया दत्तान्यमृततुल्यानि जम्बूफलानि । उक्तञ्च, प्रियो वा यदि वा द्वेष्यो मूर्खो वा यदि पण्डितः ।

वैश्वदेवान्तमापन्नः सोऽतिथिः स्वर्गसंक्रमः ॥ २ ॥
न पृच्छेच्चरणं गोत्रं न च विद्यां कुलं न च ।
अतिथिं वैश्वदेवान्ते श्राद्धे च मनुरब्रवीत् ॥ ३ ॥
दूरमार्गश्रमश्रान्तं वैश्वदेवान्तमागतम् ।
अतिथिं पूजयेद्यस्तु स याति परमां गतिम् ॥ ४ ॥
अपूजितोऽतिथिर्यस्य गृहाद्याति विनिश्वसन् ।
गच्छन्ति विमुखास्तस्य पितृभिः सह देवताः ॥ ५ ॥

एवमुक्त्वा तस्मै जम्बूफलानि ददौ। सोऽपि तानि भक्षयित्वा तेन सह चिरं गोष्ठीसुखमनुभूय भूयोऽपि स्वभवनमगात्। एवं नित्यमेव तौ वानरमकरौ जम्बूच्छायास्थितौ विविधशास्त्रगोष्ठ्या कालं नयन्तौ सुखेन तिष्ठतः। सोऽपि मकरो भक्षितशेषाणि जम्बूफलानि गृहं गत्वा स्वपत्न्याः प्रयच्छति। अथान्यतमे दिवसे तया स पृष्टः, नाथ! क्वैवंविधान्यमृतकल्पानि फलानि प्राप्नोषि। स आह, भद्रे! ममास्ति परमसुहृद्रक्तमुखो नाम वानरः; स प्रीतिपूर्वमिमानि फलानि प्रयच्छति। अथ तयाभिहितम्, यः सदैवामृतप्रायाणीदृशानि फलानि भक्षयति तस्य हृदयममृतमयं भविष्यति। तद्यदि मया भार्यया ते प्रयोजनं, ततस्तस्य हृदयं मम प्रयच्छ, येन तद्भक्षयित्वा जरामरणरहिता त्वया सह भोगान् भुनज्मि। स आह, भद्रे! मा मैवं वद। यतः स प्रतिपन्नोऽस्माकं भ्राता, अपरं फलदाता, ततो व्यापादयितुं न शक्यते। तत्त्यजैनं मिथ्याग्रहम्। उक्तञ्च,

एका प्रसूयते माता द्वितीया वाक् प्रसूयते।
वाग्जातमधिकं प्रोचुः सोदर्यादपि बन्धुवत्॥ ६॥

अथ मकर्याह, त्वया कदाचिदपि मम वचनं नान्यथा कृतम्। तन्नूनं सा वानरी भविष्यति यतस्तस्या अनुरागतः सकलमपि दिनं तत्र गमयसि। तत्त्वं ज्ञातो मया सम्यक्। यतः, साह्लादं वचनं प्रयच्छसि न मे नो वाञ्छितं किञ्चन

प्रायः प्रोच्छ्वसिषि द्रुतं हुतवहज्वालासमं रात्रिषु।

कण्ठाश्लेषपरिग्रहे शिथिलता यन्नादराञ्चुम्बसे
तत्ते धूर्त्त! हृदि स्थिता प्रियतमा काचिन्ममेवापरा ॥७॥

सोऽपि पत्न्याः पादोपसंग्रहं कृत्वाङ्कोपरि निधाय तस्याः कोपकोटिमापन्नायाः पत्न्याः सुदीनमुवाच ।

मयि ते पादपतिते किङ्करत्वमुपागते ।
त्वं प्राणवल्लभेऽकस्मात् कोपने ! कोपमेष्यसि ॥ ८ ॥

सापि तद्वचनमाकर्ण्याश्रुप्लुतमुखी तमुवाच ।

सार्द्धं मनोरथशतैस्तव धूर्त्त ! कान्ता
सैव स्थिता मनसि कृत्रिमभावरम्या ।
अस्माकमस्ति न कथञ्चिदिहावकाश-
स्तस्मात्कृतं चरणपातविडम्बनाभिः ॥ ९ ॥

अपरं सा यदि तव वल्लभा न भवति तत् किं मया भणितेऽपि तां न व्यापादयसि । अथ यदि स वानरस्तत् कस्तेन सह तव स्नेहः ? तत् किं बहुना, यदि तस्य हृदयं न भक्षयामि, तन्मया प्रायोपवेशनं कृतं विद्धि । एवं तस्यास्तन्निश्चयं ज्ञात्वा चिन्ताव्याकुलितहृदयः स प्रोवाच । अथवा साध्विदमुच्यते,

वज्रलेपस्य मूर्खस्य नारीणां कर्कटस्य च ।
एको ग्रहस्तु मीनानां नीलीमद्यपयोस्तथा ॥ १० ॥

तत् किं करोमि ? कथं स मे बध्यो भवति ? इति विचिन्त्य वानरपार्श्वमगमत् । वानरोऽपि चिरायान्तं तं सोद्वेगमवलोक्य प्रोवाच, भो मित्र ! किमद्य चिरवेलायां

समायातोऽसि ? कस्मात्साह्लादं नालापयसि ? न सुभाषितानि पठसि ? स आह, मित्र ! अहं तव भ्रातृजायया निष्ठुरतरैर्वाक्यैरभिहितः, भोः कृतघ्न ! मा मे त्वं स्वमुखं दर्शय यतस्त्वं प्रतिदिनं मित्रं उपजीवसि न च तस्य पुनः प्रत्युपकारं गृहदर्शनमात्रेणापि न करोषि। तत्ते प्रायश्चित्तमपि नास्ति। उक्तञ्च,

ब्रह्मघ्ने च सुरापे च चौरे भग्नव्रते शठे।
निष्कृतिर्विहिता सद्भिः कृतघ्ने नास्ति निष्कृतिः॥ ११॥

तत्त्वं मम देवरं गृहीत्वाद्य प्रत्युपकारार्थं गृहमानय। नो चेत् त्वया सह मे परलोके दर्शनम्। तदहं तयैव प्रोक्तस्तव सकाशमागतः। तदद्य तया सह त्वदर्थे कलहायतो मम इयती वेला विलग्ना। तदागच्छ मे गृहम्। तव भ्रातृपत्नी रचितचतुष्का प्रगुणितवस्त्रमणिमाणिक्याद्युचिताभरणा द्वारदेशबद्धवन्दनमाला सोत्कण्ठा तिष्ठति। मर्कट आह, भो मित्र ! युक्तमभिहितं मद्भ्रातृपत्न्या। उक्तञ्च,

वर्जयेत्कौलिकाकारं मित्रं प्राज्ञतरो नरः।
आत्मनः सम्मुखं नित्यं य आकर्षति लोलुपः॥ १२॥

तथा च, ददाति प्रतिगृह्णाति गुह्यमाख्याति पृच्छति।
भुङ्क्ते भोजयते चैव षड्विधं प्रीतिलक्षणम्॥ १३॥

परं वयं वनचराः ; युष्मदीयञ्च जलान्ते गृहं, तत्कथं शक्यते तत्र गन्तुम् ? तस्मात्तामपि मे भ्रातृपत्नीमत्रानय येन प्रणम्य तस्या आशीर्वादं गृह्णामि। स आह, भो मित्र !

अस्ति समुद्रान्तरे सुरम्ये पुलिनप्रदेशेऽस्मद्गृहम्। तन्मम पृष्ठमारूढः सुखेनाकृतभयो गच्छ। सोऽपि तच्छ्रुत्वा सानन्दमाह, भद्र! यद्येवं तत्किं विलम्ब्यते? त्वर्य्यताम्। एषोऽहं तव पृष्ठमारूढः। तथानुष्ठिते अगाधे जलधौ गच्छन्तं मकरमालोक्य भयत्रस्तमना वानरः प्रोवाच। भ्रातः! शनैः शनैर्गम्यताम्, जलकल्लोलैः प्लाव्यते मे शरीरम्। तदाकर्ण्य मकरश्चिन्तयामास। असावगाधं जलं प्राप्तो मे वशः सञ्जातः; मत्पृष्ठगतस्तिलमात्रमपि चलितुं न शक्नोति। तस्मात्कथयामि अस्य निजाभिप्रायं, येनाभीष्टदेवतास्मरणं करोति। आह च, मित्र! त्वं मया वधाय समानीतो भार्य्यावाक्येन विश्वास्य, तत् स्मर्य्यतामभीष्टदेवता। स आह, भ्रातः! किं मया तस्यास्तवापि चापकृतं येन मे वधोपायश्चिन्तितः। मकर आह, भो! तस्यास्तावत्तव हृदयस्यामृतमयफलरसास्वादनमृष्टस्य भक्षणे दोहदः सञ्जातः। तेनैतदनुष्ठितम्। प्रत्युत्पन्नमतिर्वानर आह, भद्र! यद्येवं तत्किं त्वया मम तत्रैव न व्याहृतं? येन स्वहृदयं जम्बूकोटरे सदैव मया सुगुप्तं कृतम्; तद्भ्रातृपत्न्या अर्पयामि। त्वयाहं शून्यहृदयोऽत्र कस्मादानीतः? तदाकर्ण्य मकरः सानन्दमाह, भद्र! यद्येवं तदर्पय मे हृदयं येन सा दुष्टपत्नी तद्भक्षयित्वानशनादुत्तिष्ठति। अहं त्वां तमेव जम्बूपादपं प्रापयामि। एवमुक्त्वा निवर्त्त्य जम्बूतलमगात्। वानरोऽपि कथमपि जल्पितविविधदेवतोपचारपूजस्तीरमासादितवान् ततश्च दीर्घ-

तरचङ्क्रमणेन तमेव जम्बूपादपमारूढश्चिन्तयामास, अहो ! लब्धास्तावत् प्राणाः । अथवा साध्विदमुच्यते,

न विश्वसेदविश्वस्ते विश्वस्तेऽपि न विश्वसेत् ।
विश्वासाद्भयमुत्पन्नं मूलान्यपि निकृन्तति ॥ १४ ॥

तन्ममैतदद्य पुनर्जन्मदिनमिव सञ्जातम् । इति चिन्तयन्तं मकर आह, भो मित्र ! अर्पय तद्धृदयं यथा ते भ्रातृपत्नी भक्षयित्वानशनादुत्तिष्ठति । अथ विहस्य निर्भर्त्सयन् वानरस्तमाह, धिग्धिग्मूर्ख ! विश्वासघातक ! किं कस्यचिद्धृदयद्वयं भवति ? तदाशु गम्यताम्, जम्बूवृक्षस्याधस्तान्न भूयोऽपि त्वयागन्तव्यम्, उक्तञ्च यतः,

सकृद्दुष्टञ्च यो मित्रं पुनः सन्धातुमिच्छति ।
स मृत्युमुपगृह्णाति गर्भमश्वतरी यथा ॥ १५ ॥

तत् श्रुत्वा मकरः सविलक्षं चिन्तितवान्, अहो ! मयातिमूढेन किमस्य स्वचित्ताभिप्रायो निवेदितः ; तद्यद्यसौ पुनरपि कथञ्चिद्विश्वासं गच्छति तद्भूयोऽपि विश्वासयामि । आह च, मित्र ! हास्येन मया तेऽभिप्रायो लब्धः । तस्या न किञ्चित्तव हृदयेन प्रयोजनम् । तदागच्छ प्राघूर्णकन्यायेनास्मद्गृहम् । तव भ्रातृपत्नी सोत्कण्ठा वर्त्तते । वानर आह, भो दुष्ट ! गम्यताम्, अधुना नाहमागमिष्यामि । उक्तञ्च,

बुभुक्षितः किं न करोति पापम्
क्षीणा जना निष्करुणा भवन्ति ।
आख्याहि भद्रे ! प्रियदर्शनस्य

न गङ्गदत्तः पुनरेति कूपम् ॥ १६ ॥

मकर आह, कथमेतत्? स आह,

## कथा २।

अस्ति कस्मिंश्चित्कूपे गङ्गदत्तो नाम मण्डूकराजः प्रतिवसति स्म। स कदाचिद्दायादैरुद्वेजितोऽरघट्टघटीमारुह्य निष्क्रान्तः। अथ तेन चिन्तितम्, यत् कथं तेषां दायादानां मया प्रत्यपकारः कर्त्तव्यः। उक्तञ्च,

आपदि येनापकृतं येन च हसितं दशासु विषमासु।
अपकृत्य तयोरुभयोः पुनरपि जातं नरं मन्ये ॥ १७ ॥

एवं चिन्तयन् बिले प्रविशन्तं कृष्णसर्पमपश्यत्। तं दृष्ट्वा भूयोऽप्यचिन्तयत्, यदेनं तत्र कूपे नीत्वा सकलदायादानामुच्छेदं करोमि। उक्तञ्च,

शत्रुभिर्योजयेच्छत्रुं बलिना बलवत्तरम्।
स्वकार्याय यतो न स्यात्काचित्पीड़ाऽत्र तत्क्षये ॥ १८ ॥

तथाच, शत्रुमुन्मूलयेत्प्राज्ञस्तीक्ष्णं तीक्ष्णेन शत्रुणा।
व्यथाकरं सुखार्थाय कण्टकेनेव कण्टकम् ॥ १९ ॥

एवं स विभाव्य बिलद्वारं गत्वा तमाहूतवान्, एह्येहि प्रियदर्शन! एहि, तच्छ्रुत्वा सर्पश्चिन्तयामास। य एष मामाह्वयति, स स्वजातीयो न भवति यतो नैषा सर्पवाणी। अन्येन केनापि सह मम मर्त्यलोके सन्धानं नास्ति। तदत्रैव दुर्गे स्थितस्तावद्वेद्मि कोऽयं भविष्यति उक्तञ्च,

मिति। सर्प आह, भो गङ्गदत्त! न सम्यगभिहितं त्वया। कथमहं तत्र गच्छामि। मदीयबिलदुर्गमन्येन रुद्धं भविष्यति। तस्मादनस्वस्य मे मण्डूकमेकैकं स्ववर्गीयं प्रयच्छ, नो चेत्सर्वानपि भक्षयिष्यामीति। तच्छ्रुत्वा गङ्गदत्तो व्याकुलमना व्यचिन्तयत्। अहो! किमेतन्मया कृतं सर्पमानयता, तद्यदि निषेधयिष्यामि तत्सर्वानपि भक्षयिष्यति। अथवा युक्तमुच्यते।

योऽमित्रं कुरुते मित्रं वीर्याभ्यधिकमात्मनः।
स करोति न सन्देहः स्वयं हि विषभक्षणम्॥ २५॥

तत्प्रयच्छाम्यस्यैकं दिनं प्रति सुहृदम्। उक्तञ्च,

सर्वस्वहरणे युक्तं शत्रुं बुद्धियुता नराः।
तोषयन्त्यल्पदानेन वाडवं सागरो यथा॥ २६॥

तथा च, यो दुर्बलोऽणूनपि याच्यमानो
बलीयसा यच्छति नैव साम्ना।
प्रयच्छते नैव च दृश्यमानम्
खारीं स चूर्णस्य पुनर्ददाति॥ २७॥

तथा च, सर्वनाशे समुत्पन्ने अर्द्धं त्यजति पण्डितः।
अर्द्धेन कुरुते कार्यं सर्वनाशो हि दुस्तरः॥ २८॥
न स्वल्पस्य कृते भूरि नाशयेन्मतिमान् नरः।
एतदेव हि पाण्डित्यं यत् स्वल्पात् भूरिरक्षणम्॥ २९॥

एवं निश्चित्य नित्यमेकैकमादिशति। सोऽपि तं भक्षयित्वा तस्य परोक्षेऽन्यानपि भक्षयति। अथवा साध्विदमुच्यते,

यथा हि मलिनैर्वस्त्रैर्यत्र तत्रोपविश्यते।
एवं चलितवित्तस्तु वित्तशेषं न रक्षति॥ २०॥

अथान्यदिने तेनापरान् मण्डूकान् भक्षयित्वा गङ्गदत्तसुतो यमुनादत्तो भक्षितः। तं भक्षितं मत्वा गङ्गदत्तस्तारस्वरेण धिग्धिक् प्रलापपरः कथञ्चिदपि न विरराम। ततः स्वपत्न्याभिहितः।

किं क्रन्दसि दुराक्रन्द! स्वपक्षक्षयकारक!।
स्वपक्षस्य क्षये जाते को नस्त्राता भविष्यति?॥ २१॥

तदद्यापि विचिन्त्यतामात्मनो निष्क्रमणमस्य वधोपायश्च। अथ गच्छता कालेन सकलमपि कवलितं मण्डूककुलम्। केवलमेको गङ्गदत्तस्तिष्ठति। ततः प्रियदर्शनेन भणितम्, भो गङ्गदत्त! बुभुक्षितोऽहम्, निःशेषिताः सर्वे मण्डूकाः। तद्दीयतां मे किञ्चिद्भोजनं यतोऽहं त्वयात्रानीतः। स आह, भो मित्र! न त्वयात्र विषये मयावस्थितेन कापि चिन्ता कार्य्या, तद्यदि मां प्रेषयसि ततोऽन्यकूपस्थानपि मण्डूकान् विश्वास्यात्रानयामि। स आह, मम तावत्त्वमभक्ष्यो भ्रातृस्थाने, तद्यद्येवं करोषि तत्साम्प्रतं पितृस्थाने भवसि, तदेवं क्रियतामिति। सोऽपि तदाकर्ण्यारघट्टघटिकामाश्रित्य विविधदेवतोपकल्पितपूजोपयाचितोऽस्मात्कूपाद्विनिष्क्रान्तः। प्रियदर्शनोऽपि तदाकाङ्क्षया तत्रस्थः प्रतीक्षमाणस्तिष्ठति। अथ चिरादनागते गङ्गदत्ते प्रियदर्शनोऽन्यकोटरनिवासिनीं गोधामुवाच, भद्रे! क्रियतां स्तोकं

यस्य न ज्ञायते शीलं न कुलं न च संश्रयः ।
न तेन सङ्गतिं कुर्यादित्युवाच बृहस्पतिः ॥ २० ॥

कदाचित्कोऽपि मन्त्रवादौषधचतुरो वा मामाहूय बन्धने क्षिपति । अथवा कश्चित्पुरुषो वैरमाश्रित्य कस्यचिद्भक्षणार्थं मामाह्वयति । आह च, भोः ! को भवान् ? स आह, अहं गङ्गदत्तो नाम मण्डूकाधिपतिस्त्वत्सकाशे मैत्र्यर्थमभ्यागतः । तच्छ्रुत्वा सर्प आह, भो ! अश्रद्धेयमेतद्यत्तृणानां वह्निना सह सङ्गमः । उक्तञ्च,

यो यस्य जायते वध्यः स स्वप्नेऽपि कथञ्चन ।
न तत्समीपमभ्येति तत्किमेवं प्रजल्पसि ॥ २१ ॥

गङ्गदत्त आह, भोः । सत्यमेतत् । स्वभाववैरी त्वमस्माकम् । परं परपरिभवात्प्राप्तोऽहं ते सकाशम् । उक्तञ्च,

सर्वनाशे च सञ्जाते प्राणानामपि संशये ।
अपि शत्रुं प्रणम्यापि रक्षेत्प्राणधनानि च ॥ २२ ॥

सर्प आह, कथय कस्मात्ते परिभवः ? स आह, दायादेभ्यः । सोऽप्याह, क्व त आश्रयो वाप्यां कूपे तडागे ह्रदे वा तत्कथय स्वाश्रयम् ? तेनोक्तम्, पाषाणचयनिबद्धे कूपे । सर्प आह, अहो ! अपदा वयं, तन्नास्ति तत्र मे प्रवेशः, प्रविष्टस्य च स्थानं नास्ति, यत्र स्थितस्तव दायादान्व्यापादयामि । तद्गम्यताम् । उक्तञ्च,

यच्छक्यं ग्रसितुं ग्रस्यं ग्रस्तं परिणमेच्च यत् ।
हितञ्च परिणामे यत्तदाद्यं भूतिमिच्छता ॥ २३ ॥

गङ्गदत्त आह, भोः । समागच्छ त्वम् । अहं सुखो

पायेन तत्र तव प्रवेशं कारयिष्यामि । तथा तस्य मध्ये जलोपान्ते रम्यतरं कोटरमस्ति ; तत्र स्थितस्त्वं लीलया दायादान् व्यापादयिष्यसि । तच्छ्रुत्वा सर्पो व्यचिन्तयत्, अहं तावत्परिणतवयाः, कदाचित्कथञ्चिन्मूषकमेकं प्राप्नोमि । तत्सुखावहो जीवनोपायोऽयमनेन कुलाङ्गारेण मे दर्शितः । तद्गत्वा तान्मण्डूकान् भक्षयामीति । अथवा साध्विदमुच्यते,

यो हि प्राणपरिक्षीणः सहायपरिवर्जितः ।
स हि सर्व्वसुखोपायां वृत्तिमाचरयेद्बुधः ॥ २४ ॥

एवं विचिन्त्य तमाह, भो गङ्गदत्त ! यद्येवं तदग्रे भव येन तत्र गच्छावः । गङ्गदत्त आह, भोः प्रियदर्शन ! अहं त्वां सुखोपायेन तत्र नेष्यामि स्थानञ्च दर्शयिष्यामि । परं त्वयास्मत्परिजनो रक्षणीयः । केवलं यानहं तव दर्शयिष्यामि त एव भक्षणीया इति । सर्प आह, साम्प्रतं त्वं मे मित्रं जातम् । तन्न भेतव्यम्, तव वचनेन भक्षणीयास्ते दायादाः । एवमुक्त्वा बिलान्निष्क्रम्य तमालिङ्ग्य च तेनैव सह प्रस्थितः । अथ कूपमासाद्यारघट्टघटिकामार्गेण सर्पस्तेनात्मना स्वालयं नीतः । ततश्च गङ्गदत्तेन कृष्णसर्पं कोटरे धृत्वा दर्शितास्ते दायादाः । ते च तेन शनैः शनैर्भक्षिताः । अथ मण्डूकाभावे सर्पेणाभिहितम् । भद्र ! निःशेषितास्ते रिपवस्तत्प्रयच्छान्यन्मे किञ्चिद्भोजनं, यतोऽहं त्वयात्रानीतः । गङ्गदत्त आह, भद्र ! कृतं त्वया मित्रकृत्यम् ; तत्साम्प्रतमनेनैव घटिकायन्त्रमार्गेण गम्यता-

माह्वायम् । यतश्चिरपरिचितस्ते गङ्गदत्तः; तद्गत्वा तत्सकाशं कुत्रचित् जलाशये अन्विष्य मम सन्देशं कथय । येनागम्यतामेकाकिनापि भवता द्रुततरं, यद्यन्ये मण्डूका नागच्छन्ति । अहं त्वया विना नात्र वस्तुं शक्नोमि । तथा यद्यहं तव विरुद्धमाचरामि तत्सुकृतमन्तरे मया विधृतम् । गोधापि तद्वचनाद्गङ्गदत्तं द्रुततरमन्विष्याह, भद्र गङ्गदत्त! स तव सुहृत्प्रियदर्शनस्तव मार्गं समीक्षमाणस्तिष्ठति । तच्छीघ्रं गम्यतामिति । अपरञ्च तेन तव विरूपकरणे सुकृतमन्तरे धृतम् । तन्निःशङ्केन मनसा समागम्यताम् । तदाकर्ण्य गङ्गदत्त आह,

बुभुक्षितः किं न करोति पापं
क्षीणा नरा निष्करुणा भवन्ति ।
आख्याहि भद्रे ! प्रियदर्शनस्य
न गङ्गदत्तः पुनरेति कूपम् ॥ १२ ॥

एवमुक्त्वा स तां विसर्जयामास ।

तद्भो दुष्टजलचर । अहमपि गङ्गदत्त इव त्वद्गृहे न कथञ्चिदपि यास्यामि । तच्छ्रुत्वा मकर आह, भो मित्र । नैतद्युज्यते ते कर्तुम् । सर्वथैव मे कृतघ्नतादोषमपनय मद्गृहागमनेन । अथवात्राहमनशनात्प्राणत्यागं तवोपरि करिष्यामि । वानर आह, मूढ़ ! किमहं लम्बकर्णो मूर्खो ? दृष्टापायेऽपि स्वयमेव तत्रैव गत्वात्मानं व्यापादयामि ।

आगतश्च गतश्चैव दृष्ट्वा सिंहपराक्रमम् ।

अकर्णहृदयो मूर्खो यो गत्वा पुनरागतः ॥ २२ ॥

मकर आह, भद्र! स को लम्बकर्णः? कथं दृष्टापायोऽपि मृतः? तन्मे निवेद्यताम्। वानर आह,

## कथा ३।

अस्ति कस्मिंश्चिद्वनोद्देशे करालकेशरो नाम सिंहः प्रतिवसति स्म; तस्य च धूसरको नाम शृगालः सदैवानुयायी परिचारकोऽस्ति। अथ कदाचित्तस्य हस्तिना सह युध्यमानस्य शरीरे गुरुतराः प्रहाराः सञ्जाता यैः पदमेकमपि चलितुं न शक्नोति तस्याचलनाच्च धूसरकः क्षुत्क्षामकण्ठो दौर्बल्यं गतः। अन्यस्मिन्नहनि तमवोचत्, स्वामिन्! बुभुक्षया पीड़ितोऽहं, पदात्पदमपि चलितुं न शक्नोमि। तत्कथं ते शुश्रूषां करोमि। सिंह आह, भो! गच्छान्वेषय किञ्चित् सत्त्वं, येनेमामवस्थां गतोऽपि व्यापादयामि। तदाकर्ण्य शृगालोऽन्वेषयन् कञ्चित्समीपवर्त्तिनं ग्राममासादितवान्। तत्र लम्बकर्णो नाम गर्दभस्तड़ागोपान्ते प्रविरलदूर्वाङ्कुरान् कृच्छ्रादास्वादयन् दृष्टः। ततश्च समीपवर्त्तिना भूत्वा तेनाभिहितः, माम! नमस्कारोऽयं मदीयः सम्भाव्यताम्। चिराद्दृष्टोऽसि। तत्कथय तत्किमेवं दुर्बलतां गतः। स आह, भो भगिनीपुत्र! किं कथयामि, रजकोऽतिनिर्दयोऽतिभारेण मां पीड़यति, घासमुष्टिमपि न प्रयच्छति। केवलं दूर्वाङ्कुरान्धूलिमिश्रितान् भक्षयामि। तत्कुतो मे शरीरे

पुष्टिः ? । शृगाल आह, माम ! यद्येवं तदस्ति मरकतसदृशशष्पप्रायो नदीसनाथो रमणीयतरः प्रदेशः । तत्रागत्य मया सह सुभाषितगोष्ठीसुखमनुभवन् तिष्ठ । लम्बकर्ण आह, भो भगिनीसुत ! युक्तमुक्तं भवता । परं वयं ग्राम्याः पशवोऽरण्यचारिणां वध्यास्तत्किं तेन भव्यप्रदेशेन ? शृगाल आह, माम ! मैवं वद, मद्भुजपञ्जरपरिरक्षितः स देशः । तत्रास्ति कश्चिदपरस्य तत्र प्रवेशः । परमनेनैव दोषेण रजककदर्थितास्तत्र तिस्रो रासभ्योऽनाथाः सन्ति । ताश्च पुष्टिमापन्ना यौवनोत्कटा इदं मामूचुः, यदि त्वमस्माकं सत्यो मातुलस्तदा किञ्चिद्ग्रामान्तरं गत्वास्मद्योग्यं कञ्चित्पतिमानय । तदर्थं त्वामहं तत्र नयामि । अथ शृगालवचनानि श्रुत्वा कामपीडिताङ्गस्तमवोचत्, भद्र ! यद्येवं तदग्रे भव, येनागच्छामि । अथवा साध्विदमुच्यते ।

नामृतं न विषं किञ्चिदेकां मुक्त्वा नितम्बिनीम् ।
यस्याः सङ्गेन जीव्येत म्रियते च वियोगतः ॥ ३४ ॥

तथाच, यासां नाम्नापि कामः स्यात्सङ्गमं दर्शनं विना ।
तासां दृक् सङ्गमं प्राप्य यन्न द्रवति कौतुकम् ॥ ३५ ॥

तथानुष्ठिते शृगालेन सह सिंहान्तिकमागतः । सिंहोऽपि व्यथाकुलितस्तं दृष्ट्वा यावत्समुत्तिष्ठति, तावद्रासभः पलायितुमारब्धवान् । अथ तस्य पलायमानस्य सिंहेन तलप्रहारो दत्तः । स च मन्दभाग्यस्य व्यवसाय इव व्यर्थतां गतः । अत्रान्तरे शृगालः कोपाविष्टस्तमुवाच, भोः ! किमेवं विधः

प्रहारस्ते ? यदद्भोऽपि तव पुरतो बलाद्गच्छति । तत्कथं गजेन सह युद्धं करिष्यसि ? तद्दृष्टं ते बलम् । अथ विलक्षस्मितं सिंह आह, भोः ! किमहं करोमि । मया न क्रमः सज्जीकृत आसीत् । अन्यथा गजोऽपि मत्क्रमाक्रान्तो न गच्छति शृगाल आह, अद्याप्येकवारं तवान्तिके तमानेष्यामि । परं त्वया सज्जीकृतक्रमेण स्थातव्यम् । सिंह आह, भद्र ! यो मां प्रत्यक्षं दृष्ट्वा गतः स पुनः कथमत्रागमिष्यति । तदन्यत्किमपि सत्त्वमन्विष्यताम् । शृगाल आह, किं तवानेन व्यापारेण ? त्वं केवलं सज्जितक्रमस्तिष्ठ । तथानुष्ठिते शृगालोऽपि यावद्रासभमार्गेण गच्छति, तावत्तत्रैव स्थाने चरन् दृष्टः । अथ शृगालं दृष्ट्वा रासभः प्राह, भो भगिनीसुत ! शोभनस्थाने त्वयाहं नीतः ; द्राङ्मृत्युवशं गतः । तत्कथय किं तत्सत्त्वं, यस्यातिरौद्रवज्रसदृशकरप्रहारादहं मुक्तः । तच्छ्रुत्वा प्रहसन् शृगाल आह, भद्र ! रासभी त्वामायान्तं दृष्ट्वा सानुरागालिङ्गितुं समुत्थिता । त्वं च कातरत्वान्नष्टः । सा पुनर्न शक्ता त्वां विना स्थातुम् । तया तु नश्यतस्तेऽवलम्बनार्थं हस्तः क्षिप्तो नान्यकारणेन, तदागच्छ, सा त्वत्कृते प्रायोपवेशना उपविष्टा तिष्ठति । एतद्वदति, यल्लम्बकर्णो यदि मे भर्त्ता न भवति, तदहमग्नौ जले वा प्रविशामि, पुनस्तस्य वियोगं सोढुं न शक्नोमि । तत्प्रसादं कृत्वा तत्रागम्यतामिति । नो चेत्तव स्त्रीहत्या भविष्यति । अपरं भगवान् कामः कोपं तव करिष्यति । उक्तञ्च,

स्त्रीमुद्रां मकरध्वजस्य जयिनीं सर्व्वार्थसम्पत्करीं
ये मूढ़ाः प्रविहाय यान्ति कुधियो मिथ्याफलान्वेषिणः ।
ते तेनव निहत्य निर्दयतरं नग्नीकृता मुण्डिताः
केचिद्रक्तपटीकृताश्च जटिलाः कापालिकाश्चापरे ॥ ३६॥

अथासौ तद्वचनं श्रद्धेयतया श्रुत्वा भूयोऽपि तेन सह प्रस्थितः । अथवा साध्विदमुच्यते ।

जानन्नपि नरो दैवात्प्रकरोति विगर्हितम् ।
कर्म्म किं कस्यचिल्लोके गर्हितं रोचते कथम् ॥ ३७ ॥

अत्रान्तरे सज्जितक्रमेण सिंहेन स लम्बकर्णो व्यापादितः । ततस्तं हत्वा शृगालं रक्षपालं निरूप्य स्वयं स्नानार्थं नद्यां गतः । शृगालेनापि लौल्यौत्सुक्यात्तस्य कर्णहृदयं भक्षितम् । अत्रान्तरे सिंहो यावत्स्नात्वा कृतदेवार्चनः प्रतर्पितपितृगणः समायाति तावत्कर्णहृदयरहितो रासभस्तिष्ठति । तं दृष्ट्वा कोपपरीतात्मा सिंहः शृगालमाह, पाप । किमिदमनुचितं कर्म्म समाचरितं ? यत् कर्णहृदयभक्षणेनायमुच्छिष्टतां नीतः । शृगालः सविनयमाह । स्वामिन् । मा मैवं वद । यत्कर्णहृदयरहितोऽयं रासभ आसीत् । तेनेहागत्य त्वामवलोक्य भूयोऽप्यागतः अथ तद्वचनं श्रद्धेयं मत्वा सिंहस्तेनैव सह संविभज्य निःशङ्कितमनास्तं भक्षितवान् ।

अतोऽहं ब्रवीमि ।

आगतश्च गतश्चैव दृष्ट्वा सिंहपराक्रमम् ।
अकर्णहृदयी मूर्खो यो गत्वा पुनरागतः ॥ ३८ ॥

तन्मूर्ख ! कापटं कृतं त्वया । परं युधिष्ठिरेणेव सत्यवचनेन विनाशितम् । अथवा साध्विदमुच्यते ।

स्वार्थमुत्सृज्य यो दम्भी सत्यं ब्रूते स मन्दधीः ।
स स्वार्थाद्भ्रश्यते नूनं युधिष्ठिर इवापरः ॥ ३८ ॥

मकर आह, कथमेतत् ? स आह,

## कथा ४ ।

कस्मिंश्चिदधिष्ठाने कुम्भकारः प्रतिवसति स्म ; स कदाचित्प्रमादादर्द्धभग्नघटकर्परतीक्ष्णाग्रस्योपरि महता वेगेन धावन् पतितः । ततः कर्परकोट्या पाटितललाटो रुधिरप्लावितनुः कृच्छ्रादुत्थाय स्वाश्रयं गतः । ततश्चापथ्यसेवनात्स प्रहारस्तस्य करालतां गतः कृच्छ्रेण नीरोग्यतां नीतः । अथ कदाचिद्दुर्भिक्षपीड़िते देशे स कुम्भकारः क्षुत्क्षामकण्ठः कैश्चिद्राजसेवकैः सह देशान्तरं गत्वा कस्यापि राज्ञः सेवको बभूव । सोऽपि राजा तस्य ललाटे विकरालं प्रहारक्षतं दृष्ट्वा चिन्तयामास, यद्वीरः पुरुषः कश्चिदयम् । नूनं तेन ललाटपट्टे सम्मुखप्रहारः । अतस्तं सम्मानादिभिः सर्वेषां राजपुत्राणां सकाशाद्विशेषप्रसादेन पश्यति । तेऽपि राजपुत्रास्तस्य तं प्रसादातिरेकं पश्यन्तः परमेर्ष्याधर्मं वहन्तो राजभयान्न किञ्चिदूचुः । अथान्यस्मिन्नहनि तस्य भूपतेर्वीरसम्भावनायां क्रियमाणायां विग्रहे समुपस्थिते प्रकल्प्यमानेषु गजेषु सन्नह्यमानेषु वाजिषु योधेषु प्रगुणीक्रियमाणेषु तेन भूभुजा

स कुम्भकारः प्रस्तावानुगतं पृष्टो निर्व्यञ्जने। भो राजपुत्र! किं ते नाम? का च जातिः? कस्मिन् संग्रामे प्रहारोऽयं ते ललाटे लग्नः। स आह, देव! नायं शस्त्रप्रहारः। युधिष्ठिराभिधः कुलालोऽहं प्रकृत्या, मद्गेहेऽनेककर्पराण्यासन्। अथ कदाचिन्मद्यपानं कृत्वा निर्गतः प्रधावन् कर्परोपरि पतितः। तस्य प्रहारविकारोऽयं मे ललाट एवं विकरालतां गतः। तदाकर्ण्य राजा सव्रीडमाह, अहो! वञ्चितोऽहं राजपुत्रानुकारिणानेन कुलालेन। तद्दीयतां द्रागेतस्य चन्द्रार्धः। तथानुष्ठिते कुम्भकार आह, मा मैवं कुरु। पश्य मे रणे हस्तलाघवम्। राजा प्राह, भोः सर्वगुणसम्पन्नो भवान्। तथापि गम्यताम्। उक्तञ्च,

शूरश्च कृतविद्यश्च दर्शनीयोऽसि पुत्रक।
यस्मिन् कुले त्वमुत्पन्नो गजस्तत्र न हन्यते॥ ४०॥

कुलाल आह, कथमेतत्? राजा कथयति,

## कथा ५।

अस्ति कस्मिंश्चिद्देशे सिंहदम्पती प्रतिवसतः स्म; अथ सिंही पुत्रद्वयमजीजनत्। सिंहोऽपि नित्यमेव मृगान् व्यापाद्य सिंह्यै ददाति, अथान्यस्मिन्नहनि तेन किमपि नासादितम्। वने भ्रमतोऽपि तस्य रविरस्तं गतः। अथ तेन स्वगृहमागच्छता शृगालशिशुः प्राप्तः। स च बालकोऽयमित्यवधार्य यत्नेन दंष्ट्रामध्यगतं कृत्वा सिंह्या जीव-

त्तमेव समर्पितवान् । ततः सिंह्याभिहितं, भोः कान्त ! त्वयानीतं किञ्चिदस्माकं भोजनम् ? सिंह आह, प्रिये । मयाद्यैनं शृगालशिशुं परित्यज्य न किञ्चित् सत्त्वमासादितम् । स च बालोऽयमिति मत्वा न व्यापादितो विशेषात् स्वजातीयश्च । उक्तञ्च यतः ।

स्त्रीविप्रलिङ्गिबालेषु प्रहर्त्तव्यं न कर्हिचित् ।
प्राणत्यागेऽपि सञ्जाते विश्वस्तेषु विशेषतः ॥ ४१ ॥

इदानीं त्वमेनं भक्षयित्वा पथ्यं कुरु । प्रभातेऽन्यत् किञ्चिदुपार्जयिष्यामि । सा प्राह, भो कान्त । त्वया बालकोऽयं विचिन्त्य न हतः । तत् कथमेनमहं स्वोदरार्थं विनाशयामि । उक्तञ्च,

अकृत्यं नैव कर्त्तव्यं प्राणत्यागेऽपि संस्थिते ।
न च कृत्यं परित्याज्यं धर्म्म एष सनातनः ॥ ४२ ॥

तस्मान्ममायं तृतीयः पुत्रो भविष्यति । इत्येवमुक्त्वा तमपि स्वस्तनक्षीरेण परां पुष्टिमनयत् । एवं ते त्रयोऽपि शिशवः परस्परमज्ञातजातिविशेषा एकाचारविहारा बाल्यसमयं निर्व्वाहयन्ति । अथ कदाचित् तत्रवने भ्रमन्नरण्यगजः समायातः । तं दृष्ट्वा तौ सिंहसुतौ द्वावपि कुपिताननौ तं प्रति प्रचलितौ यावत्, तावत् तेन शृगालसुतेनाभिहितं, अहो ! गजोऽयं युष्मत्कुलशत्रुः, तन्न गन्तव्यमेतस्याभिमुखम् । एवमुक्त्वा गृहं प्रधावितः । तावपि ज्येष्ठबान्धवभङ्गान्निरुत्साहतां गतौ । अथवा साध्विदमुच्यते ।

एकेनापि सुधीरेण सोत्साहेन रणं प्रति ।
सोत्साहं जायते सैन्यं भग्ने भङ्गमवाप्नुयात् ॥ ४३ ॥

तथा च, अत एव हि वाञ्छन्ति भूपा योधान् महाबलान् ।
शूरान् वीरान् क्कृतोत्साहान् वर्जयन्ति च कातरान् ॥ ४४ ॥

अथ तौ द्वावपि गृहं प्राप्य पित्रोरग्रतो विहसन्तौ ज्येष्ठ भ्रातृचेष्टितमूचतुः । यथा गजं दृष्ट्वा दूरतोऽपि नष्टः । सोऽपि तदाकर्ण्य कोपाविष्टमनाः प्रस्फुरिताधरपल्लवस्ताम्रलोचनस्त्रिशिखां भ्रुकुटिं कृत्वा तौ निर्भर्त्सयन् परुषतरवचनान्युवाच । ततः सिंह्यैकान्ते नीत्वा प्रबोधितोऽसौ । वत्स ! मैवं कदाचिज्जल्प । भवदीयलघुभ्रातरावेतौ । अथासौ प्रभूतकोपाविष्टस्तामुवाच, किमहमेताभ्यां शौर्येण रूपेण विद्याभ्यासेन कौशलेन वा हीनः ? येन मामुपहसतः । तन्मयावश्यमेतौ व्यापादनीयौ । तदाकर्ण्य सिंही तस्य जीवितमिच्छन्त्यन्तर्विहस्य प्राह ।

शूरोऽसि कृतविद्योऽसि दर्शनीयोऽसि पुत्रक !
यस्मिन् कुले त्वमुत्पन्नो गजस्तत्र न हन्यते ॥ ४५ ॥

तत् सम्यक् शृणु वत्स ! त्वं शृगालीसुतः कृपया मया स्वस्तनक्षीरेण पुष्टिं नीतः । तद्यावदेतौ मत्पुत्रौ शिशुत्वात् त्वां शृगालं न जानीतः, तावत् द्रुततरं गत्वा स्वजातीयानां मध्ये भव ; नो चेदाभ्यां हतो मृत्युपथं समेष्यसि । सोऽपि तद्वचनं श्रुत्वा भयव्याकुलमनाः शनैः शनैरपसृत्य स्वजात्या मिलितः । तस्मात् त्वमपि यावदेते राजपुत्रास्त्वां

कुलालं न जानन्ति । तावद्द्रुततरमपसर । नोचेदेतेषां सकाशाद्विड़म्बनां प्राप्य मरिष्यसि । कुलालोऽपि तदाकर्ण्य सत्वरं प्रनष्टः । अतोऽहं ब्रवीमि,

स्वार्थमुत्सृज्य यो दम्भी सत्यं ब्रूते समन्दधीः ।
स स्वार्थाद्भ्रश्यते नूनं युधिष्ठिर इवापरः ॥ ४६ ॥

धिग्मूर्ख ! यत् त्वया स्त्रियोऽर्थे एतत् कार्यमनुष्ठातुमारब्धम् । न हि स्त्रीणां कथञ्चिद्विश्वासमुपगच्छेत् । उक्तञ्च,

यदर्थे स्वकुलं त्यक्तं जीवितार्द्धञ्च हारितम् ।
सा मां त्यजति निःस्नेहा कः स्त्रीणां विश्वसेन्नरः ? ॥ ४७ ॥

मकर आह, कथमेतत् ? वानर आह,

## कथा ६ ।

अस्ति कस्मिंश्चिदधिष्ठाने कोऽपि ब्राह्मणः; तस्य च प्रियातिप्राणप्रिया । सापि प्रतिदिनं कुटुम्बेन सह कलहं कुर्वाणा न विश्राम्यति । सोऽपि ब्राह्मणः कलहमसहमानो भार्यावात्सल्यात् स्वकुटुम्बं परित्यज्य ब्राह्मण्या सह विप्रकृष्टं देशान्तरं गतः । अथ महाटवीमध्ये ब्राह्मण्याभिहितः; आर्य्यपुत्र ! तृष्णा मां बाधते । तदुदकं क्वाप्यन्वेषय । अथासौ तद्वचनानन्तरं यावदुदकं गृहीत्वा समागच्छति, तावत् तां मृतामपश्यत् । अतिवल्लभतया विषादं कुर्व्वन् यावद्विलपति, तावदाकाशे वाचं शृणोति । तथा हि, यदि ब्राह्मण । त्वं स्वकीयजीवितस्यार्द्धं ददासि, ततस्ते जीवति ब्राह्मणी ।

येनापि पूर्ववृत्तान्तः सकलोऽपि तस्मै निवेदितः। अतोऽहं ब्रवीमि।

यदर्थे स्वकुलं त्यक्तं जीवितार्द्धञ्च हारितम्।
सा मां त्यजति निःस्नेहा कः स्त्रीणां विश्वसेन्नरः॥ ४७

वानरः पुनराह, साधु चेदमुपाख्यानकं श्रूयते,

न किं दद्यान्न किं कुर्य्यात् स्त्रीभिरभ्यर्थितो नरः।
अनश्वा यत्र हेषन्ते शिरोऽपर्वणि मुण्डितम्॥ ४८॥

मकर आह, कथमेतत्? वानरः कथयति।

कथा ७।

अस्ति प्रख्यातबलपौरुषोऽनेकनरेन्द्रवृन्दमुकुटमरीचिजालजटिलीकृतपादपीठः शरच्छशाङ्ककिरणनिर्मलयशाः समुद्रपर्य्यन्तायाः पृथिव्या भर्त्ता नन्दोनाम राजा; तस्य सर्वशास्त्राधिगतसमस्ततत्त्वः सचिवो वररुचिर्नाम; तस्य च प्रणयकलहेन जाया कुपिता। सा चातीव वल्लभानेकप्रकारं परितोष्यमाणापि न प्रसीदति। ब्रवीति च भर्त्ता, भद्रे! येन प्रकारेण तुष्यसि तं वद, निश्चितं करोमि। ततः कथञ्चित् तयोक्तं, यदि शिरो मुण्डयित्वा मम पादयोर्निपतसि, तदा प्रसादाभिमुखी भवामि। तथानुष्ठिते प्रसन्नासौ। अथ नन्दस्य भार्य्यापि तथैव रुष्टा प्रसाद्यमानापि न तुष्यति। तेनोक्तं, भद्रे! त्वया विना मुहूर्त्तमपि न जीवामि, पादयोः पतित्वा त्वां प्रसादयामि। साब्रवीत्, यदि खलीनं मुखे प्रक्षिप्याहं तव पृष्ठे समारुह्य त्वां धावयामि। धावि-

तस्तु यदाश्ववद्धेषसे, तदा प्रसन्ना भवामि । तथैवानुष्ठितम् । अथ प्रभातसमये सभोपविष्टस्य राज्ञो वररुचिरायातः । तञ्च दृष्ट्वा राजा पप्रच्छ, भो वररुचे! किमपर्वणि मुण्डितं शिरस्ते ? सोऽब्रवीत् ।

न किं दद्यान्न किं कुर्य्यात् स्त्रीभिरर्थ्यार्थितो नरः ।
अनश्वा यत्र हेषन्ते शिरोऽपर्विणि मुण्डितम् ॥ ४८ ॥

तन्नो दुष्टमकर ! त्वमपि नन्दवररुचिवत् स्त्रीवश्यः । ततस्तन्नद्रानीतेन त्वया मां प्रति बधोपायप्रयासः प्रारब्धः, परं स्ववाग्दोषेणैव प्रकटीभूतः । अथवा साध्विदमुच्यते ।

आत्मनो मुखदोषेण बध्यन्ते शुकसारिकाः ।
वकास्तत्र न बध्यन्ते मौनं सर्व्वार्थसाधनम् ॥ ५० ॥

तथाच, सुगुप्तं रक्ष्यमाणोऽपि दर्शयन् दारुणम् वपुः ।
व्याघ्रचर्म्मप्रतिच्छन्नो वाक्कृते रासभो हतः ॥ ५१ ॥

मकर आह, कथमेतत् ? वानरः कथयति ।

## कथा ८ ।

अस्ति कस्मिंश्चिदधिष्ठाने शुद्धपटो नाम रजकः प्रतिवसति स्म । तस्य च गर्दभ एकोऽस्ति ; सोऽपि घासाभावादतिदुर्व्वलतां गतः । अथ तेन रजकेनाटव्यां परिभ्रमता मृतव्याघ्रो दृष्टः । चिन्तितञ्च, अहो ! शोभनमापतितम् । अनेन व्याघ्रचर्म्मणा प्रतिच्छाद्य रासभं रात्रौ यवक्षेत्रेषूत्स्रक्ष्यामि ; येन व्याघ्रं मत्वा समीपवर्त्तिनः क्षेत्रपाला एनं न निष्कासयिष्यन्ति । तथानुष्ठिते रासभो यथेच्छया यवभक्षणं करोति

तत् श्रुत्वा ब्राह्मणेन शुचीभूय तिसृभिर्वाचाभिः स्वजीवितार्द्धं दत्तम्। वाक्सममेव च ब्राह्मणी जीविता सा। अथ तौ जलं पीत्वा वनफलानि भक्षयित्वा गन्तुमारब्धौ। ततः क्रमेण कस्यचिन्नगरस्य प्रवेशे पुष्पवाटिकां प्रविश्य ब्राह्मणी भार्य्यामभिहितवान्, भद्रे! यावदहं भोजनं गृहीत्वा समागच्छामि तावदत्र त्वया स्थातव्यं, इत्यभिधाय प्रायासीत्। अथ तस्यां पुष्पवाटिकायां पङ्गुररघट्टं खेलयन् दिव्यगिरा गीतमुद्गिरयति। तच्च श्रुत्वा कुसुमेषुणार्दितया तत्सकाशं गत्वाभिहितम्, भद्र! यदि मां न कामयसे, तन्मत्सक्ता स्त्रीहत्या तव भविष्यति। पङ्गुरब्रवीत्, किं व्याधिग्रस्तेन मया करिष्यसि? साब्रवीत्, किमनेनोक्तेन, अवश्यं त्वया सह मया सङ्गमः कर्त्तव्यः। तत् श्रुत्वा तथा कृतवान्। सुरतानन्तरं साब्रवीत्, इतः प्रभृतिः यावज्जीवं मयात्मा भवते दत्तः। इति ज्ञात्वा भवानप्यस्माभिः सहागच्छतु। सोऽब्रवीत्, एवमस्तु; अथ ब्राह्मणो भोजनं गृहीत्वा समागत्य तया सह भोक्तुमारब्धः। साब्रवीत्, एष पङ्गुर्बुभुक्षितः, तदेतस्यापि कियन्तमपि ग्रासं देहीति। तथैवानुष्ठिते ब्राह्मण्याभिहितम्। ब्राह्मण, सहायहीनस्त्वं यदा ग्रामान्तरं गच्छसि, तदा मम वचनसहायोऽपि नास्ति। तत एनं पङ्गुं गृहीत्वा गच्छावः। सोऽब्रवीत्, न शक्नोम्यात्मानमप्यात्मना वोढुम्। किं पुनरेनं पङ्गुम्? साब्रवीत्, पेटाभ्यन्तरस्थमेनमहं नेष्यामि। अथ तत् कृतकवचनव्यामो-

ह्नितचित्तेन तेन प्रतिपन्नम्। तथानुष्ठित एवान्यस्मिन् दिने कूपोपकण्ठे विश्रान्तो ब्राह्मणस्तया पङ्गुपुरुषासक्तया सम्प्रेर्य्य कूपान्तः पातितः। सापि पङ्गुं गृहीत्वा कस्मिंश्चिन्नगरे प्रविष्टा। तत्र शुल्कचौर्य्यरक्षानिमित्तं राजपुरुषैरितस्ततो भ्रमद्भिस्तन्मस्तकस्था पेटा दृष्टा, बलादाच्छिद्य राजाग्रे नीता। राजा च यावत् तामुत्पाटयति, तावत् तं पङ्गुं ददर्श। ततः सा ब्राह्मणी विलापं कुर्वती राजपुरुषानुपदमेव तत्रागता। राज्ञा पृष्टा को वृत्तान्त इति। साब्रवीत्, ममैव भर्त्ता व्याधिबाधितो दायादसमूहैरुद्वेजितो मया स्नेहव्याकुलितमानसया शिरसि कृत्वा त्वत्सकाशमानीतः। तत् श्रुत्वा राजाब्रवीत्, ब्राह्मणि! मे त्वं भगिनी, ग्रामद्वयं गृहीत्वा भर्त्रा सह भोगान् भुञ्जाना सुखेन तिष्ठ। अथ स ब्राह्मणो दैववशात् केनापि साधुना कूपादुत्तारितः परिभ्रमंस्तदेव नगरमायातः। तया दुष्टभार्य्यया दृष्टो राज्ञे निवेदितः। राजन्! अयं मम भर्त्तुर्वैरी समायातः। राज्ञापि बध आदिष्टः। सोऽब्रवीत्, देव! अनया मम सक्तं किञ्चिद्गृहीतमस्ति, यदि त्वं धर्म्मवत्सलः, तद्दापय। राजाब्रवीत्, भद्रे! यत् त्वयास्य सक्तं किञ्चिद्गृहीतमस्ति तत् समर्पय। सा प्राह, देव। मया न किञ्चित् गृहीतम्। ब्राह्मण आह, यन्मया त्रिवाचिकं स्वजीवितार्द्धं दत्तं, तद्देहि। अथ सा राजभयात् तत्रैव त्रिवाचिकमेव जीवितं मया दत्तमिति जल्पन्ती प्राणैर्विमुक्ता। ततः सविस्मयं राजाब्रवीत्, किमेतदिति। ब्राह्म-

प्रत्यूषे भूयोऽपि रजकः स्वाश्रयं नयति । एवं गच्छता कालेन स रासभः पीवरतनुर्जातः । कृच्छ्राद्बन्धनस्थानमपि नीयते । अथान्यस्मिन्नहनि स मदोद्धतो दूराद्रासभीशब्दमशृणोत् । तत् श्रवणमात्रेणैव स्वयं शब्दयितुमारब्धः । अथ ते क्षेत्रपाला रासभोऽयं व्याघ्रचर्मप्रतिच्छन्न इति ज्ञात्वा लगुडशरपाषाणप्रहारैस्तं व्यापादितवन्तः । अतोऽहं ब्रवीमि ।

सुगुप्तं रक्ष्यमाणोऽपि दर्शयन् दारुणं वपुः ।
व्याघ्रचर्मप्रतिच्छन्नो वाकृते रासभो हतः ॥ ५२ ॥

अथैवं तेन सह वदतो मकरस्य जलचरेणैकेनागत्याभिहितं, भो मकर । त्वदीया भार्य्यानशनोपविष्टा त्वयि चिरयति प्रणयाभिभवाद्विपन्ना । एवं तद्वज्रपातसदृशवचनमाकर्ण्यातीव व्याकुलितहृदयः प्रलपितमेवं चकार । अहो ! किमिदं सञ्जातं मे मन्दभाग्यस्य । उक्तञ्च,

माता यस्य गृहे नास्ति भार्य्या चाप्रियवादिनी ।
अरण्यं तेन गन्तव्यं यथारण्यं तथा गृहम् ॥ ५३ ॥

तन्मित्र ! चम्यतां मया तेऽपराधः कृतः । सम्प्रत्यहं तु स्त्रीवियोगाद्वैश्वानरप्रवेशं करिष्यामि । तच्छ्रुत्वा वानरः प्रहसन् प्रोवाच, भो । ज्ञातस्त्वं मया प्रथममेव यत् त्वं स्त्रीवश्यः स्त्रीजितश्च । साम्प्रतञ्च प्रत्ययः सञ्जातः । तन्मूढ ! आनन्देऽपि जाते त्वं विषादं गत. । तादृग् भार्य्यायां मृतयामुत्सवः कर्त्तुं प्रयुज्यते, उक्तञ्च यतः ।

या भार्य्या दुष्टचारित्रा सततं कलहप्रिया

भार्य्यारूपेण सा ज्ञेया विदग्धैर्दारुणा जरा ॥ ५४ ॥
तस्मात् सर्व्वप्रयत्नेन नामापि परिवर्जयेत्।
स्त्रीणामिह हि सर्व्वासां य इच्छेत् सुखमात्मनः ॥ ५५ ॥
यदन्तस्तन्न जिह्वायां यज्जिह्वायां न तद्बहिः ।
यद्बहिस्तन्न कुर्व्वन्ति विचित्रचरिताः स्त्रियः ॥ ५६ ॥
के नाम न विनश्यन्ति मिथ्याज्ञानान्नितम्बिनीम् ।
रम्यां ये उपसर्पन्ति दीपाभां शलभा यथा ॥ ५७ ॥
अन्तर्विषमया ह्येता बहिश्चैव मनोरमाः ।
गुञ्जाफलसमाकाराः स्वभावादेव योषितः ॥ ५८ ॥
ताड़िता अपि दण्डेन शस्त्रैरपि विखण्डिताः ।
न वशं योषितो यान्ति न दानैर्न च संस्तवैः ॥ ५९ ॥
आस्तां तावत् किमन्येन दौरात्म्येनेह योषिताम् ।
विधृतं स्वोदरेणापि घ्नन्ति पुत्रं स्वकं रुषा ॥ ६० ॥
रूक्षायां स्नेहसद्भावं कठोरायां सुमार्दवम् ।
नीरसायां रसं बालो बालिकायां विकल्पयेत् ॥ ६१ ॥

मकर आह, भो मित्र ! अस्त्येतत्, परं किं करोमि; ममानर्थद्वयमेतत् सञ्जातम् । एकस्तावद् गृहभङ्गः, अपर स्त्वद्विधेन मित्रेण सह चित्तविश्लेषः ; अथवा भवत्येव दैवयोगात्, उक्तञ्च यतः ।

यादृशं मम पाण्डित्यं तादृशं द्विगुणं तव ।
नाभूज्जारो न भर्त्ता च किं निरीक्षसि ? नग्निके ! ॥६२॥

वानर आह, कथमेतत् ? मकरोऽब्रवीत् ।

## कथा ९ ।

अस्ति कस्मिंश्चिदधिष्ठाने हालिकदम्पती प्रतिवसतः स्म ; सा च हालिकभार्या पत्युर्वृद्धभावात् सदैवान्यचित्ता न कथञ्चिद् गृहे स्थैर्यमालम्बते, केवलं परपुरुषानन्वेषमाणा परिभ्रमति । अथ केनचित् परवित्तापहारकेण धूर्त्तेन सा लक्षिता विजने प्रोक्ता च, सुभगे ! मृतभार्योऽहं । त्वद्दर्शनेन स्मरपीड़ितश्च । तद्दीयतां मे रतिदक्षिणा, ततस्तयाभिहितं, भो सुभग ! यद्येवं तदस्ति मे पत्युः प्रभूतं धन, स च वृद्धत्वात् प्रचलितुमप्यसमर्थः । ततस्तद्धनमादायाहमागच्छामि । येन त्वया सहान्यत्र गत्वा यथेच्छया रतिसुख मनुभविष्यामि । सोऽब्रवीत्, रोचते मह्यमप्येतत् । प्रत्यूषेऽत्र स्थाने शीघ्रमेव समागन्तव्य येन शुभतरं किञ्चिन्नगरं गत्वा त्वया सह जीवलोकः सफलीक्रियते । सापि तथेति प्रतिज्ञाय प्रहसितवदना स्वगृहं गत्वा रात्रौ प्रसुप्ते भर्त्तरि सर्व्वं वित्तमादाय प्रत्यूषसमये तत्कथितस्थानमुपाद्रवत् । धूर्त्तोऽपि तामग्रे विधाय दक्षिणां दिशमाश्रित्य सत्वरगतिः प्रस्थितः । एवं तयोर्व्रजतोर्योजनद्वयमात्रेणाग्रतः काचिन्नदी समुपस्थिता । तां दृष्ट्वा धूर्त्तश्चिन्तयामास, किमहमनया यौवनप्रान्ते वर्त्तमानया करिष्यामि । किञ्च कदाप्यस्याः पृष्ठतः कोऽपि समेष्यति, तन्मे महाननर्थः स्यात् । तत् केवलमस्या वित्तमादाय गच्छामीति निश्चित्य तामुवाच, प्रिये !

सुदुस्तरेयं महानदी। तदहं द्रव्यमात्रं पारे धृत्वा समागच्छामि। ततस्त्वामेकाकिनीं स्वपृष्ठमारोप्य सुखेनोत्तारयिष्यामि। सा प्राह, सुभग! एवं क्रियताम्। इत्युक्त्वा शेषं वित्तं तस्मै समर्पयामास। अथ तेनाभिहितं, भद्रे! परिधानाच्छादनवस्त्रमपि समर्पय, येन जलमध्ये निःशङ्का व्रजसि। तथानुष्ठिते धूर्त्तो वित्तं वस्त्रयुगलञ्चादाय यथाचिन्तितविषयं गतः। सापि कण्ठनिवेशितहस्तयुगला सोद्वेगा नदीपुलिनदेशे उपविष्टा यावत्तिष्ठति, तावदेतस्मिन्नन्तरे काचिच्छृगालिका मांसपिण्डगृहीतवदना तत्राजगाम। आगत्य च यावत् पश्यति, तावन्नदीतीरे महान् मत्स्यः सलिलान्निष्क्रम्य वहिःस्थित आस्ते। एतच्च दृष्ट्वा सा मांसपिण्डं समुत्सृज्य तं मत्स्यं प्रत्युपाद्रवत्। अत्रान्तरे आकाशादवतीर्य्य कोऽपि गृध्रस्तं मांसपिण्डमादाय पुनः खमुत्पपात। मत्स्योऽपि शृगालिकां दृष्ट्वा नद्यां प्रविवेश। अथ सा शृगालिका व्यर्थश्रमा गृध्रमवलोकयन्ती तथा नग्निकया सस्मितमभिहिता;

गृध्रेणापहृतं मांसं मत्स्योऽपि सलिलंगतः।
मत्स्यमांसपरिभ्रष्टे किं निरीक्षसि? जम्बुके!॥ ६३॥

तत् श्रुत्वा शृगालिका तामपि पतिधनजारपरिभ्रष्टां दृष्ट्वा सोपहासमाह,

यादृशं मम पाण्डित्यं तादृशं द्विगुणं तव।
नाभूज्जारो न भर्त्ता च किं निरीक्षसि? नग्निके!॥ ६४॥

एवं तस्य कथयतः पुनरन्येन जलचरेणागत्य निवेदि-

तम्। यदहो! त्वदीयं गृहमप्यपरेण महामकरेण गृहीतं, तच्छ्रुत्वासावतिदुःखितमनास्तं गृहान्निःसारयितुमुपायं चिन्तयन्नुवाच, अहो! पश्यतां मे दैवोपहतत्वम्।

मित्रं ह्यमित्रतां यातं अपरं मे प्रिया मृता।
गृहमन्येन च व्याप्तं किमद्यापि भविष्यति ॥ ६५ ॥

अथवा युक्तमिदमुच्यते,

क्षते प्रहारा निपतन्त्यभीक्ष्णमन्नक्षये वर्द्धति जाठराग्निः।
आपत्सु वैराणि समुद्भवन्ति वामे विधौ सर्वमिदं नराणाम् ॥ ६६ ॥

तत् किं करोमि? किमनेन सह युद्धं करोमि? किंवा साम्नैव सम्बोध्य गृहान्निःसारयामि। किंवा भेदं दानं वा करोमि? अथवामुमेव वानरमित्रं पृच्छामि? उक्तञ्च,

यः पृष्ट्वा कुरुते कार्य्यं प्रष्टव्यान् स्वहितान् गुरून्।
न तस्य जायते विघ्नः कस्मिंश्चिदपि कर्म्मणि ॥ ६७ ॥

एवं सम्प्रधार्य्य भूयोऽपि तमेव जम्बूवृक्षमारूढं कपिमपृच्छत्, भो मित्र! पश्य मे मन्दभाग्यताम्। यत् साम्प्रतं गृहमपि मे बलवत्तरेण मकरेण रुद्धम्। तदहं त्वां प्रष्टुमभ्यागतः, कथय किं करोमि। सामादीनामुपायानां मध्ये कस्यात्र विषयः। स आह, भो कृतघ्न! पापचारिन्! मया निषिद्धोऽपि किं भूयो मामनुसरसि, नाहं तव मूर्खस्योपदेशमपि दास्यामि। तच्छ्रुत्वा मकरः प्राह, भो मित्र! सापराधस्य मे पूर्व्वस्नेहमनुस्मृत्य हितोपदेशं देहि, वानर आह, नाहं ते कथयिष्यामि। यद्भार्य्यावाक्येन भवताहं समुद्रे

प्रक्षेपं नीतः ; तदेव न युक्तं, यद्यपि भार्य्या सर्व्वलोकादपि वल्लभा भवति, तथापि न मित्राणि बान्धवाश्च भार्य्या वाक्येन समुद्रे प्रक्षिप्यन्ते। तन्मूर्ख ! मूढ़त्वेन नाशस्तव मया प्रागेव निवेदित आसीत्, यतः।

सतां वचनमादिष्टं मदेन न करोति यः।

स विनाशमवाप्नोति घण्टोष्ट्र इव सत्वरम् ॥ ६८ ॥

मकर आह, कथमेतत् ? सोऽब्रवीत्।

## कथा १०।

अस्ति कस्मिंश्चिदधिष्ठाने उद्धलको नाम रथकारः प्रतिवसति स्म ? स चातीवदारिद्र्योपहतश्चिन्तितवान्। अहो ! धिगियं दरिद्रतास्मद्गृहे। यतः सर्व्वोऽपि जनः स्वकर्म्मण्येव रतस्तिष्ठति। अस्मदीयः पुनर्व्यापारो नात्राधिष्ठानेऽघतिः। यतः सर्व्वलोकानां चिरन्तनाश्चतुर्भूमिका गृहाः सन्ति। मम च नात्र, तत् किं मदीयेन रथकारत्वेन प्रयोजनम् ? इति चिन्तयित्वा देशान्निष्क्रान्तः। यावत् किञ्चिद्वनं गच्छति, तावद्गह्वराकारवनगहनमध्ये सूर्य्यास्तमनवेलायां स्वयूथाद्भ्रष्टां प्रसववेदनया पीड्यमानामुष्ट्रीमपश्यत्, स च दासेरकयुक्तामुष्ट्रीं गृहीत्वा स्वस्थानाभिमुखः प्रस्थितः, गृहमासाद्य रज्जुं गृहीत्वा तामुष्ट्रिकां बबन्ध। ततश्च तीक्ष्णं परशुमादाय तस्याः कृते पल्लवानयनार्थं पर्व्वतैकदेशे गतः। तत्र च नूतनानि कोमलानि बहूनि पल्लवानि छित्वा शिरसि

समारोप्य तस्याग्रे निचिक्षेप। तया च तानि शनैः शनैर्भक्षितानि। पश्चात् पल्लवभक्षणप्रभावादहर्निशं पीवरतनुरुष्ट्री सञ्जाता। सोऽपि दासेरको महानुष्ट्रः सञ्जातः। ततः स नित्यमेव दुग्धं गृहीत्वा स्वकुटुम्बं परिपालयति। अथ रथकारेण वल्लभत्वाद्दासेरकग्रीवायां महती घण्टा प्रतिबद्धा। पश्चाद्रथकारो व्यचिन्तयत्, अहो! किमन्यैः दुष्कृतकर्म्मभिः; यावन्ममैतदेवोष्ट्रीपरिपालनमस्य कुटुम्बस्य भव्यं सञ्जातम्। तत् किमन्येन व्यापारेण। एवं विचिन्त्य गृहमागत्य प्रियामाह। भद्रे! तव सम्मत्या समीचीनोऽयं व्यापारः। तत् कुतोऽपि धनिकात् किञ्चिद्द्रव्यमादाय मया गुर्जरदेशे गन्तव्यं कलभग्रहणाय। तावत् त्वयैतौ यत्नेन रक्षणीयौ। यावदहमपरामुष्ट्रीं नीत्वा समागच्छामि। ततश्च गुर्जरग्रामं गत्वोष्ट्रीं गृहीत्वा स्वगृहमागतः। किं बहुना, तेन तथा कृतं यथा तस्य प्रचुरा उष्ट्राः करभाश्च सम्मिलिताः। ततस्तेन महदुष्ट्रयूथं कृत्वा रक्षापुरुषो धृतः। तस्य वर्षं प्रति वृत्त्या करभमेकं प्रयच्छति। अन्यदाहर्निशं दुग्धपानं तस्य कृतम्। एवं रथकारोऽपि नित्यमेवोष्ट्रीकरभव्यापारं कुर्व्वन् सुखेन तिष्ठति। अथ ते दासेरका अधिष्ठानोपवन आहारार्थं गच्छन्ति। कोमलवल्लीर्यथेच्छया भक्षयित्वा महति सरसि पानीयं पीत्वा सायन्तनसमये मन्दं मन्दं लीलया गृहमागच्छन्ति। स च पूर्व्वदासेरको मदातिरेकात् पृष्ठ आगत्य मिलितः। ततस्तैः कलभैरभिहितं, अहो! मन्दमतिरयं दासेरको यथा

यूथाद्भ्रष्ट. पृष्ठे स्थित्वा घण्टां वादयन्नागच्छति। यदि कस्यापि दुष्टसत्त्वस्य दृष्टौ पतिष्यति, तन्नूनं मृत्युमवाप्स्यति। अथ तेषां तद्वनं गाहमानानां कश्चित् सिंहो घण्टारवमाकर्ण्य समायातः। यावदवलोकयति, तावद्दृष्टो दासेरकानां यूथं गच्छति। एकस्तु पुनः पृष्ठे क्रीड़ां कुर्वन् वल्लरीश्चरन् याव त्तिष्ठति, तावदन्ये दासेरकाः पानीयं पीत्वा स्वस्थे गताः। सोऽपि वनान्निष्क्रम्य यावद्दिशोऽवलोकयति, तावन्न कश्चिन्मार्गं पश्यति वेत्ति च। यथाद्भ्रष्टो मन्दं मन्दं बृहच्छब्दं कुर्वन् यावत् कियद्दूरं गच्छति, तावत् तच्छब्दानुसारी सिंहोऽपि क्रमं कृत्वा निभृतोऽग्रे व्यवस्थितः। तथायदुष्टः, समीपमागतः, तावत् सिंहेन लङ्घयित्वा ग्रीवायां गृहीतो मारितश्च। अतोऽहं ब्रवीमि।

सतां वचनमादिष्टं मदेन न करोति यः।
स विनाशमवाप्नोति घण्टोष्ट्र इव सत्वरम्॥ ६८॥

अथ तच्छ्रुत्वा मकरः प्राह, भद्र।

प्राहुः साप्तपदं मैत्रं जनाः शास्त्रविचक्षणाः।
मित्रताञ्च पुरस्कृत्य किञ्चिद्वक्ष्यामि तच्छृणु॥ ७०॥
उपदेशप्रदातॄणां नराणां हितमिच्छताम्।
परस्मिन्निह लोके च व्यसनं नोपपद्यते॥ ७१॥

तत् सर्व्वथा कृतघ्नस्यापि मे कुरु प्रसादमुपदेशप्रदानेन।
उक्तञ्च, उपकारिषु यः साधुः साधुत्वे तस्य को गुणः ?
अपकारिषु यः साधुः स साधुः सद्भिरुच्यते॥ ७२॥

तदाकर्ण्य वानरः प्राह, भद्र! यद्येवं तर्हि तत्र गत्वा तेन सह युद्धं कुरु। उक्तञ्च,

हतस्त्वं प्राप्स्यसि स्वर्गं जीवन् गृहमथो यशः।
युध्यमानस्य ते भावि गुणद्वयमनुत्तमम्॥ ७३॥
उत्तमं प्रणिपातेन शूरं भेदेन योजयेत्।
नीचमल्पप्रदानेन समशक्तिं पराक्रमैः॥ ७४॥

मकरः प्राह, कथमेतत्? सोऽब्रवीत्,

## कथा ११।

अस्ति कस्मिंश्चिद्वनोद्देशे महाचतुरको नाम शृगालः, तेन कदाचिदरण्ये स्वयंमृतो गजः समासादितः। तस्य समन्तात् परिभ्रमति। परं कठिनां त्वचं भेत्तुं न शक्नोति। अथात्रावसर इतश्चेतश्च विचरन् कश्चित् सिंहस्तत्रैव प्रदेशे समाययौ। अथ समागतं दृष्ट्वा स क्षितितलविन्यस्तमौलिमण्डलः संयोजितकरयुगलः सविनयमुवाच, स्वामिन्! त्वदीयोऽहं लागुडिकः स्थितस्त्वदर्थे गजमिमं रक्षामि। तदेनं भक्षयतु स्वामी। तं प्रणतं दृष्ट्वा सिंह प्राह, भो! नाहमन्येन हतं सत्त्वं कदाचिदपि भक्षयामि। उक्तञ्च,

वनेऽपि सिंहा मृगमांसभक्ष्या बुभुक्षिता नैव तृणं चरन्ति।
एवं कुलीना व्यसनाभिभूता न नीतिमार्गं परिलङ्घयन्ति॥ ७५

तत् तवैव गजोऽयं मया प्रसादीकृतः। तत् श्रुत्वा शृगालः सानन्दमाह, युक्तमिदं स्वामिनो निजभृत्येषु।

